

श्रीमत्पद्मपुराणान्तर्गता

# शिवगीता ।



बालानन्दिन्याख्यव्याख्यया

विद्वद्वरश्रीमल्लक्ष्मीनरहरिसूनुविरचितया समलंकृता

सेयं

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

पदच्छेदपरसवर्णाद्याधुनिकरीत्या परिष्कृता ।




मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

आयसाक्षरैरङ्कयित्वा प्रकाश्यं नीता ।

---

शाकः १८५०, सन १९२९.

---

मूल्यं १२ आणकाः ।

गुणातीतोऽपीशस्त्रिगुणसचिवब्रह्मधरमय-

त्रिमूर्तिर्यः सर्गस्थितिविलयकर्माणि तनुते ।



कृपापारावारः परमगतिरेकः पुनरयं

नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥

॥ ॐ ॥

# शिवगीता ।

## बालनन्दिनीव्याख्यासंवलिता ।

### प्रथमोऽध्यायः १

ॐ नमः शिवाय ।

सूत उवाच ।

अथातः संप्रवक्ष्यामि शुद्धकैवल्यमुक्तिदम् ।
अनुग्रहान्महेशस्य भवदुःखस्य भेषजम् ॥ १ ॥

---

लक्ष्मीनृसिंहचरणद्वयमादरेण
नत्वा चतुर्विधपुमर्थनिदानभूतम् ।
भट्टोजिदीक्षितकृतिं कृतिभिर्विभाव्या-
मालोक्य बालमतये वितनोमि टीकाम् ॥ १ ॥

अथेति । नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमादिषट्कं मुमुक्षुत्वं चेति साधनसंपन्ना एते मां पृच्छन्तीति निर्णयानन्तरं, यत एतेऽल्पश्रवणमात्रेण कृतार्था भविष्यन्त्येव तथापि गुरुमुखादेतच्छास्त्रस्याध्येतारोऽन्येऽपि मुक्ता भविष्यन्ति । अतः कारणादिदं वक्ष्यमाण—गीताशास्त्रार्थं युष्मान्प्रति वक्ष्यामि । एतच्छास्त्रस्य वक्तृत्व—श्रोतृत्वे महेश्वरानुग्रह एव कारणमित्याह—अनुग्रहादिति । तदुक्तम्—"ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयकृतत्राणपराणामेव जायते ॥" इति । कीदृशं गीताशास्त्रमित्यत आह—भवेति । भवः संसारः स एव दुःखं रोगस्तस्य भेषजं निवृत्तिसाधनमौषधम् । न केवलमेतावदेव किंतु शुद्धकैवल्यमुक्तिदम् । केवलस्य

न कर्मणामनुष्ठानैर्न दानैस्तपसापि वा ।
कैवल्यं लभते मर्त्यः किंतु ज्ञानेन केवलम् ॥ २ ॥
रामाय दण्डकारण्ये पार्वतीपतिना पुरा ।
या प्रोक्ता शिवगीताख्या गुह्याद्गुह्यतमापि सा ॥ ३ ॥

---

भावः कैवल्यं ब्रह्म तदेव मुक्तिः शुद्धा चासौ कैवल्यमुक्तिश्च सा तथोक्ता तां ददाति तत्तथा । विशेषणद्वयेन शोकनिवृत्तिरानन्दावाप्तिश्च प्रयोजनमस्य शास्त्रस्येति सूचितम् । शुद्धकैवल्येत्यत्र शुद्धपदेन सारूप्यादिसातिशयमुक्तीनां निरासः सूचितः । अनुग्रहान्महेशस्येत्यनेन स्वस्य सूतत्वेऽपि मोक्षशास्त्रोपदेशेऽधिकारः सूचितः । यद्यपि भिषजः कर्मेति तद्धितेऽणि आदिवृद्ध्या भाव्यं तथापि "केवलमामक" इति सूत्रे निपातनाद्गुणः । तथाच निघण्टुः—"भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इति ॥ १ ॥ न कर्मणेति । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "ज्ञानादेव तु कैवल्यम्" इतीममर्थं मनसि निधायाह । कर्मणां श्रौतस्मार्तादीनामनुष्ठानैर्मर्त्यः मरणधर्मा देवादिमनुष्यान्तः कश्चिदपि कैवल्यं मोक्षं न लभते । दानैः कल्पोक्तैर्गोभूम्यादिवितरणैः । तपसापि वा कृच्छ्रचान्द्रायणादिरूपेण न लभते । कर्मादीनां स्वर्गफलकत्वान्निष्कामतयानुष्ठितानां चित्तशुद्धिद्वारा विविदिषाफलकत्वात् । तर्हि मोक्षः केन साधनेन भवतीत्याशङ्कायामाह—किंत्विति । इतरनिरपेक्षज्ञानेनैव "तमेव विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते" इत्यादिश्रुतेः ॥ २ ॥ गुरूत्तमशिष्योत्तमसंवादतया प्रवृत्तमिदं गीताशास्त्रमुपनिषद्वाक्यमेवेति प्रशंसन्नाह—रामायेति । सा गीता मया युष्मभ्यमुपदिश्यते । सा केत्याकाङ्क्षायामाह । पुरा पूर्वं दण्डकारण्ये पार्वतीपतिना शिवेन रामाय या गीता प्रोक्ता सा । गुह्येति । अतिरहस्यभूतापि । अपिना गुरोर्वात्सल्यं सूचितम् । शिवपदेनाख्यापदेन च सर्वासां गीतानां मध्ये अस्याः श्रेष्ठत्वं सूचितम् ॥३॥

यस्याः स्मरणमात्रेण नृणां मुक्तिर्ध्रुवा हि सा।
पुरा सनत्कुमाराय स्कन्देनाभिहिता हि सा ॥ ४ ॥
सनत्कुमारः प्रोवाच व्यासाय मुनिसत्तमाः।
मह्यं कृतातिरेकेण प्रददौ बादरायणः ॥ ५ ॥
उक्तं च तेन कस्मैचिन्न दातव्यमिदं त्वया।
सूतपुत्रान्यथा देवाः क्षुभ्यन्ति च शपन्ति च ॥ ६ ॥

---

तदेव श्रेष्ठत्वं संप्रदायशुद्धिपूर्वकं सूचयितुं स्वगुरुपरम्परामाह— यस्या इति। यस्याः शिवगीतायाः स्मरणमात्रेण तदर्थध्यानमात्रेण। अस्यां शिवगीतायां शुद्धबुद्धमुक्तस्वरूपं ब्रह्मैवाध्यारोपापवादाभ्यां प्रतिपादितमस्तीति ध्यानमात्रेणेत्यर्थः। नृणामिति बहुवचनेन देवादीनामपि सा प्रसिद्धा। ध्रुवा निर्बाधा ब्रह्मस्वरूपभूतेत्यर्थः। हि निश्चयेन मुक्तिर्भवतीति शेषः। सा शिवगीता सनत्कुमाराय स्कन्देन पुरा अभिहितोपदिष्टा। हिशब्देन सर्वगीताश्रेष्ठत्वं द्योतयति ॥ ४ ॥ सनत्कुमार इति। हे मुनिषु सत्तमाः श्रेष्ठाः, इत्यनेन संबोधनेन भवादृशाः सर्वेऽत्राधिकारिण इति ध्वनयति। बादरायणो व्यासः कृपातिरेकेण दयाया अतिशयेन मह्यं प्रददौ। मह्यमिति संप्रदानचतुर्थ्या ब्रह्मविद्याप्रदानस्य सर्वदानोत्तमत्वं सूचितम्। कृपातिरेकेणेत्युक्त्या गुरुशुश्रूषया स्वस्मिन् गुरुप्रसादः सूचितः। "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति श्रुतेः, "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति स्मृतेश्च ॥ ५ ॥ उक्तं चेति। तेन प्रसिद्धेन मद्गुरुणा गीतोपदेशानन्तरमुक्तं च। किमुक्तं तदेवाह—कस्मैचिदिति। इदं शास्त्रं कस्मैचिदनधिकारिणे त्वया न दातव्यम्। अन्यथा मद्वाक्यस्यापरिपालनेनानधिकारिभ्योऽपि दाने क्रियमाणे देवा इन्द्रादयः क्षुभ्यन्ति रुष्टा भवन्ति। शपन्ति च। दातारं वक्तारमिति शेषः।

अथ पृष्टो मया विप्रो भगवान्बादरायणः ।
भगवन्देवताः सर्वाः किं क्षुभ्यन्ति शपन्ति च ।
तासामत्रास्ति का हानिर्यया कुप्यन्ति देवताः ॥ ७ ॥
पाराशर्योऽथ मामाह यत्पृष्टं शृणु वत्सल ।
नित्याग्निहोत्रिणो विप्राः सन्ति ये गृहमेधिनः ॥ ८ ॥
त एव सर्वफलदाः सुराणां कामधेनवः ।
भक्ष्यं भोज्यं च पेयं च यद्यदिष्टं सुपर्वणाम् ॥ ९ ॥

---

तदुक्तं निरुक्ते—"विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्" इति । "इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥" इति स्मृतेश्च ॥६॥ अथेति । "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" इत्युक्तलक्षणो बादरायणो मया पृष्टः । यत्पृष्टं तदाह—भगवन्निति । गुरुं प्रतीदमेव संबोधनमिति सूचयति । "अधीहि भगवो ब्रह्मेति" इत्यादिश्रुतेः । किं किमर्थं क्षुभ्यन्ति शपन्ति च । तासां देवतानाम् । यस्मै कस्मैचिद्दत्तायामित्यत्रशब्दस्यार्थः । का हानिरस्ति । यया हान्या ॥ ७ ॥ पाराशर्य इति । अथ मम प्रश्नानन्तरं पाराशर्यो व्यासो मां प्रत्याह । हे वत्सल दयालो, स्वयं त्वं कृतार्थोऽपि लोकानुग्रहार्थं पृच्छसीति संबुद्ध्या सूचितम् । यत्त्वया पृष्टं तासामत्रास्ति का हानिरिति । शृणु तस्योत्तरमिति शेषः । तदेवाह—नित्येति । गृहमेधिनो गृहस्थाः ॥ ८ ॥ त इति । त एव सुराणां सर्वफलदाः कामधेनुकल्पाः । कामधेनुकल्पत्वमाह—भक्ष्यमिति । यद्यदिष्टं प्रियं सुपर्वणां देवानां

अग्नौ हुतेन हविषा तत्सर्वं लभ्यते दिवि।
नान्यदस्ति सुरेशानामिष्टसिद्धिप्रदं दिवि ॥ १० ॥
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम्।
तथैव ज्ञानवान्विप्रो देवानां दुःखदो भवेत् ॥ ११ ॥
त्रिदशास्तेन विघ्नन्ति प्रविष्टाश्वविषयं नृणाम्।
ततो न जायते भक्तिः शिवे कस्यापि देहिनः ॥ १२ ॥
तस्मादविदुषां नैव जायते शूलपाणिनः।
यथाकथंचिज्जातापि मध्ये विच्छिद्यते नृणाम् ॥ १३ ॥

---

॥ ९ ॥ अग्नाविति। हुतेन प्रक्षिप्तेन हविषा पुरोडाशादिना तत्सर्वं दिवि लभ्यते नान्यदिति देवानामिष्टप्रदं साधनान्तरं नास्तीति भावः। दिवीति द्विर्ग्रहणं स्वर्गभेदविवक्षयेति ज्ञेयम् ॥ १० ॥ ततः किं तत्राह—दोग्ध्रीति। दोहनशीला दोग्ध्री धेनुर्गौः। नीता केनचिदपहृता सती यथा गृहमेधिनां दुःखदा भवति तथैवेति। विप्र इत्युपलक्षणं क्षत्रियादेरपि। तेन कारणेन त्रिदशा देवाः विघ्नन्ति ज्ञानप्रतिबन्धं कुर्वन्ति ॥ ११ ॥ नृणां विषयं स्त्रीपुत्रादिरूपं प्रविष्टाः सन्तस्तान्स्त्रीपुत्रादीन्दृष्ट्वा मनस्येवं दयते। यदि मया ज्ञाननिष्ठेन भवितव्यं तदा ते मरिष्यन्ति। एवं देवाः प्रेरयन्ति। इदमेव विघ्नाचरणमिति भावः। तथाच श्रुतिः—"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः" इति। तत इति। ततो देवकृतविघ्नात्कस्यापि देहिनः पुराणश्रवणादौ प्रवृत्तस्यापि शिवे भक्तिर्न जायते। अश्रद्दधानत्वादिति भावः ॥ १२ ॥ तस्मादिति। तस्माद्देवकृतविघ्नादेव। अविदुषां पुराणश्रवणरहितानां तु शूलपाणिनः भक्तिर्नैव जायते। शूलपाणेरिति वक्तव्ये शूलपाणिन इत्यार्षप्रयोगः 'छन्दोवदृषयः कुर्वन्ति' इति महाभाष्यात्। यथेति। यथाकथंचिदतिप्रयत्नाच्छिन्नाभ्रमिव मध्ये विच्छिद्यते। ज्ञानोत्पत्तेः पूर्व-

जातं वापि शिवज्ञानं विश्वासं न भजत्यलम् ॥ १४ ॥
ऋषय ऊचुः ।
यद्येवं देवता विघ्नमाचरन्ति तनूभृताम् ।
पौरुषं तत्र कस्यास्ति येन मुक्तिर्भविष्यति ॥ १५ ॥
सत्यं सूतात्मज ब्रूहि तत्रोपायोऽस्ति वा न वा ।
सूत उवाच ।
कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ॥ १६ ॥
इष्टापूर्तानि कर्माणि तेनाचरति मानवः ।
शिवार्पणधिया कामान्परित्यज्य यथाविधि ॥ १७ ॥

---

मेव नश्यतीत्यर्थः ॥ १३ ॥ जातमिति । अविच्छिन्नया भक्त्या जातमपि शिवज्ञानं विश्वासं न भजति । अप्रामाण्यशङ्कयाभिभूतं भवतीत्यर्थः ॥ १४ ॥ एवं श्रुत्वा ज्ञाने निराशाः सन्त ऋषय ऊचुः—यद्येवमिति । एवं प्रागुक्तरीत्या देवता यदि विघ्नं तनूभृतां देहिनामाचरन्ति तर्हि तत्र विघ्ननिवारणे कस्य पौरुषं सामर्थ्यमस्ति येन मुक्तिर्भविष्यति ॥ १५ ॥ सत्यमिति । तत्र देवकृतविघ्ननिवारणे उपायोऽस्ति वा न वेति संशये उपायोऽस्त्यथवा नास्ति इति सत्यमेकमुत्तरं ब्रूहीत्यर्थः । एवं मुनिभिः पृष्टे सुगमदुर्गमप्रकारभेदेनोपायमाह—कोटीति । कोटिसंख्याकेषु जन्मस्वर्जितपुण्यैरिति दुर्गमप्रकारभेदः । अस्मिन्प्रकृतजन्मनि शिवे भक्तिः प्रजायत इति सुगमप्रकारभेदः । संस्कारबलेन अनायासतः शिवे भक्तेर्जायमानत्वात् । अग्रे भक्तिदृढीकरणादिसाधनेष्वीश्वरप्रेरणा पुंप्रयत्नश्च द्वयमपि कारणम् । पुरुषप्रयत्नानङ्गीकारे विधिवाक्यमनर्थकं स्यात् । "दैवं पुरुषकारश्च सिद्ध्यतोऽन्योन्यसंश्रयात्" इत्यादित्यपुराणविरोधश्च । येन कारणेन द्वयमप्यपेक्षितं तेन कारणेनेत्यर्थः ॥ १६ ॥ इष्टेति । इष्टानि यागाः । पूर्तानि तडागारामादीनि । इष्टानि च पूर्तानि चेति द्वन्द्वे "अन्येषामपि दृश्यते" इति दीर्घः । इह बहुकृत-

अनुग्रहात्तेन शंभोर्जायते सुदृढो नरः ।
ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः ॥ १८ ॥
जायते तेन शुश्रूषा चरिते चन्द्रमौलिनः ।
शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते ॥ १९ ॥
बहुनात्र किमुक्तेन यस्य भक्तिः शिवे दृढा ।
महापापौघपापौघकोटिग्रस्तो विमुच्यते ॥ २० ॥

---

प्राग्भवीयसुकृतसंपत्त्या शिवे भक्तिः, तत ईश्वरार्पणबुद्ध्या निष्कर्मानुष्ठानं, ततश्चित्तशुद्धिः, ततो नित्यानित्यवस्तुविवेकः, तत इहामुत्रार्थफलभोगविरागः, ततः शमादिसंपत्, ततो मुमुक्षा, ततो जिज्ञासा, ततः संन्यासः, ततो गुरूपसत्तिः, ततः श्रवणमनने, ततो निदिध्यासनं, ततोऽप्रतिबद्धसाक्षात्कारः, ततो यावत्प्रारब्धं जीवन्मुक्तिस्ततः परमा मुक्तिरितिं सिद्धान्तसंमतः पन्थाः । ततः शिवे भक्तिर्जनिष्यमाणां कार्यकारणपरम्परामाह—शिवार्पणेति । कामान्फलवासनाः परित्यज्य शिवार्पणबुद्ध्या यथाविधि इष्टापूर्तान्याचरतीति पूर्वेणान्वयः । तेन शिवार्पणबुद्ध्या कृतेन कर्मणेत्यर्थः । शंभोरनुग्रहः प्रसादो भवति ॥ १७ ॥ अन्विति । तस्मादनुग्रहात्सुदृढो नरो जायते । विघ्नबाहुल्ये प्राप्तेऽपि शिवभक्तौ निश्चितबुद्धिरित्यर्थः । तत इति । ततो निश्चितबुद्धेः पुरुषाच्छापसंभावनया भीताः सन्तो विघ्नं हित्वा विघ्नाचरणं विहाय पलायन्त इत्यर्थः ॥ १८ ॥ जायत इति । तेन विघ्नपरिहारेण चन्द्रमौलिनश्चन्द्रशेखरस्य चरिते शुश्रूषा श्रवणेच्छा जायते । एवं सगुणनिर्गुणचरितं शृण्वतः क्रमाद्वैराग्यं ततोऽध्यासनिवृत्तिस्ततो ब्रह्मात्मैक्यज्ञानं ततो मुक्तो भवतीत्यर्थः । एवकारेण "तमेव विदित्वातिमृत्युमेति" इत्यादिश्रुतयः संगृहीताः ॥ १९ ॥ बहुनेति । अत्र शिवभक्तौ बहुना उक्तेन भाषणेन किम् । न किमपि प्रयोजनमित्यर्थः । यस्य पुरुषधौरेयस्य शिवे दृढा भक्तिः

**संसारबन्धनात्तस्मादन्यः को वा विमूढधीः ॥ २१ ॥**
**नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा ।**
**तस्यापि चेत्प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् ॥ २२ ॥**

---

जातेति शेषः । स महापापौघः पञ्चमहापापानि अन्यानि पापानि तेषां समुदायश्च तेषां कोटिभिर्ग्रस्तोऽपि विमुच्यते । "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः"। "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः" इत्यादिस्मृतेः । नन्वेवंविधेषु पापेषु सत्सु कथं भक्तिर्भविष्यतीति कुतर्को न विधेयः । अस्मिन् जन्मनि जातया प्रवर्धमानया शिवभक्त्या प्राग्भवीयं तादृशं किंचित्कारणमर्थापत्त्या कल्प्यते । तत्कारणं तानि सर्वाणि पापानि पराणुद्य स्वकार्यभूतां भक्तिं जनयति । सा भक्तिस्तान्यनारब्धफलानि सर्वपापानि नाशयतीति कल्प्यते । अन्यथा "धर्मेण पापमपनुदति" इत्यादिबहुश्रुतिस्मृतिव्याकोपः प्रसज्येतेति दिक् ॥ २० ॥ तस्मात्कारणादन्यो विमूढधीरपि शिवभक्त्यापि न विमुच्यते एतादृशः को वा । न कोऽपीत्यर्थः । परमपापिष्ठोऽपि शिवभक्त्या संसारबन्धनान्मुक्तो भवतीति भावः ॥ २१ ॥ कैमुतिकन्यायमुदाहरति—नियमादिति । द्रोहं द्वेषं चेद्यदि नियमात्करोति तस्यापि द्रोग्धुर्वाप्यसौ शिवः प्रसन्नः सन् वाञ्छितं फलं यच्छति । एवं सति भक्तिं कुर्वतस्तु वाञ्छितं यच्छतीति किमु वक्तव्यमिति भावः । अत्र माध्वाः भक्तिरेव भगवत्प्रसादंप्रति कारणं द्वेषादिकं तु नरकसाधनमित्याहुः । तदसत् । भागवते पूतनामुपक्रम्योक्तम्—"पूतना लोकबालघ्नी राक्षसी रुधिराशना । जिघांसयापि हरये स्तनं दत्त्वाऽप सद्गतिम् ॥" अन्यच्च "गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च । नित्यं हरौ विदधतो यान्ति मन्मयतां हि ते ॥" इत्यादिविरोधात् ॥२२॥

ऋद्धं किंचित्समादाय क्षुल्लकं जलमेव वा ।
यो दत्ते नियमेनासौ तस्मै दत्ते जगत्त्रयम् ॥ २३ ॥
तत्राप्यशक्तो नियमान्नमस्कारं प्रदक्षिणाम् ।
यः करोति महेशस्य तस्मै तुष्टो भवेच्छिवः ॥ २४ ॥
प्रदक्षिणास्वशक्तोऽपि यः स्वान्ते चिन्तयेच्छिवम् ।
गच्छन्समुपविष्टो वा तस्याभीष्टं प्रयच्छति ॥ २५ ॥
चन्दनं बिल्वकाष्ठस्य पुष्पाणि वनजान्यपि ।
फलानि तादृशान्येव यस्य प्रीतिकराणि वै ॥
दुष्करं तस्य सेवायां किमस्ति भुवनत्रये ॥ २६ ॥
वन्येषु यादृशी प्रीतिर्वर्तते परमेशितुः ।
उत्तमेष्वपि नास्त्येव ग्रामजेष्वपि तादृशी ॥ २७ ॥
तं त्यक्त्वा तादृशं देवं यः सेवेतान्यदेवताम् ।
स हि भागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णिकाम् ॥२८॥

---

नेश्वरभक्तौ कोऽपि प्रयास इत्याशयेनाह—ऋद्धमिति । विभवे सति सर्वोपचारपूर्णं वा भवतु दारिद्र्ये सति क्षुल्लकं स्वल्पं जलमेव वा भवतु । तत्समर्पणमेव मुख्यमिति भावः । उभयोरपि फलसाम्यमाह—जगत्त्रयमिति । भक्तकृतनियम एवेश्वरस्य प्रीतिर्न तु प्रदेयवस्तुविशेष इति भावः ॥ २३ ॥ २४ ॥ प्रदक्षिणास्विति । स्वान्ते मनसि । आसनादिनियमोऽपि नास्तीत्याह—गच्छन्निति ॥ २५ ॥ अतिसौलभ्यमाह सार्धेन श्लोकेन—चन्दनमिति । दुष्करं दुःसंपादम् ॥ २६ ॥ सहजसरलत्वं शिवस्याह—वन्येष्विति । "यादृगादौ सूत्रमते कर्मकर्तरि कृत्स्मृतः । महाभाष्ये त्विवेत्यर्थे दृग्दृशौ तद्धितौ मतौ ॥" इति ॥ २७ ॥ अभक्तं निन्दति—तमिति । इन्द्रादयः सर्वेऽपि जीवा एव पुण्यविशेषेण देवत्वं प्राप्तास्तां यां च कां-

किंतु यस्यास्ति दुरितं कोटिजन्मसु संचितम्।
तस्य प्रकाशते नायं त्वर्थो मोहान्धचेतसः ॥ २९ ॥
न कालनियमो यत्र न देशस्य स्थलस्य च।
यत्रास्य रमते चित्तं तत्र ध्यानेन केवलम् ॥
स्वात्मत्वेन शिवस्यासौ शिवसायुज्यमाप्नुयात् ॥ ३० ॥
अतिस्वल्पतरायुःश्रीर्भूतेशांशाधिपोऽपि यः।
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम् ॥ ३१ ॥
कर्तापि सर्वलोकानामक्षयैश्वर्यवानपि।
शिवः शिवोऽहमस्मीति वादिनं यं च कंचन।
आत्मना सह तादात्म्यभागिनं कुरुते भृशम् ॥ ३२ ॥

---

चन देवतामित्यर्थः। मृगतृष्णिकां मृगजलम्। परमार्थतोऽभेदेऽपि व्यावहारिकभेदाभिप्रायेणोक्तमिति भावः ॥ २८ ॥ ननु यदीश्वरस्य पूजादिकमतिसुलभं महाफलं च तर्हि देही तदनादरेण संसारे किमिति भ्राम्यतीत्यत आह—किंत्विति। अयमर्थः। सौलभ्येन महाफलप्राप्तिरूपः मोहेनाज्ञानेन अन्धं विचारशून्यं चेतो यस्य स तथाभूतस्तस्य ॥ २९ ॥ सौकर्यान्तरमाह—नेति। यत्रास्योपासकस्य चित्तं रमते प्रसन्नं भवति तत्र स्वात्मत्वेन शिवस्य केवलं ध्यानेन ध्यानमात्रेणेत्यर्थः। शिवसायुज्यं प्राप्नुयात्। ततः क्रमेण शुद्धमुक्तिमपि ॥ ३० ॥ इदं स्वात्मत्वेनोपासनं प्राकृतप्रभूणां प्रतिकूलं नतु सर्वज्ञस्येश्वरस्येत्याह—अतीति। अतिस्वल्पतरे आयुःश्रियौ यस्य स तथा। भूतेशस्य शिवस्यांशभूतो महाराजः सोऽधिपो यस्य स तथा। माण्डलिक इत्यर्थः। एतादृशः स तु अहं राजेतिवादिनं सान्वयं पुत्रपौत्रादियुक्तं हन्ति ॥ ३१ ॥ एवं क्षुद्रप्रभोः स्थितिं प्रतिपाद्य महाप्रभोः शिवस्य स्थितिमाह सार्धेन—कर्तेति। "भुवनस्य कर्ता" इति श्रुतेः। अक्षयेति। "एतावानस्य महिमा" इति श्रुतेः।

धर्मार्थकाममोक्षाणां परं यास्यन्ति येन वै।
मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम् ॥ ३३ ॥
कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारिणः।
जपन्तो वेदसाराख्यं शिवनामसहस्रकम् ॥ ३४ ॥
संत्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्य च।
ततः प्रसन्नो भगवाञ्छंकरो लोकशंकरः ॥
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति ॥ ३५ ॥
रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभवः।
तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः ॥ ३६ ॥

इति श्रीपद्मपुराणे शिवगीतायां प्रथमोऽध्यायः ॥ १ ॥

---

यं कंचन आपाततः श्रुतवेदान्तमपीत्यर्थः। तादात्म्यभाजं सायुज्यभाजमित्यर्थः। इदमुपासनं क्रममुक्तिपरम्। पञ्चम्या मुक्तेरग्रे वक्ष्यमाणत्वादिति भावः ॥ ३२ ॥ अन्तःकरणशुद्धावुपायान्तरं प्रतिजानीते—धर्मार्थेति। पारं सिद्धिम् ॥ ३३ ॥ यदुपक्रान्तं व्रतं तस्य विधिमाह—कृत्वेति। दीक्षा नाम। विरजामिति। विगतं रजः पापं येषां ते विरजसः निष्पापाः। विरजसः 'तत्करोति' इति ण्यन्तात्पचाद्यच्। 'णाविष्ठवत्' इति टिलोप इति सर्वे स्वकारप्रभृतयः। वस्तुतस्त्वकारान्तोऽपि रजशब्दोऽस्ति। "रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु" इति कोशात् ॥३४॥ ततः किं स्यादित्यत आह—संत्यज्येति। तेन व्रतेन मर्त्यत्वं मरणधर्मत्वं संत्यज्य शैवीं शिवसाक्षात्कारयोग्याम्। दृश्यतां प्रत्यक्षत्वमेत्य प्राप्य वः युष्मभ्यं कैवल्यं परममुक्तिम् ॥३५॥ रामायेति। कुम्भसंभवोऽगस्त्यः यद्दीक्षादिकम्। भक्तियोगो विद्यते येषां ते तथोक्ताः सन्तः शृणुध्वं शृणुतेत्यर्थः ॥३६॥

इति श्रीशिवगीताबालानन्दिनीव्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः २

ऋषय ऊचुः ।

किमर्थमागतोऽगस्त्यो रामचन्द्रस्य संनिधिम् ।
कथं वा विरजां दीक्षां कारयामास राघवम् ॥ १ ॥
ततः किमाप्तवान्रामः फलं तद्वक्तुमर्हसि ।

सूत उवाच ।

रावणेन यदा सीतापहृता जनकात्मजा ।
तदा वियोगदुःखेन विलपन्नास राघवः ॥ २ ॥
निर्निद्रो निरहंकारो निराहारो दिवानिशम् ।
मोक्तुमैच्छत्ततः प्राणान्सानुजो रघुनन्दनः ॥ ३ ॥
लोपामुद्रापतिर्ज्ञात्वा तस्य संनिधिमागमत् ।
अथ तं बोधयामास संसारासारतां मुनिः ॥ ४ ॥

---

पूर्वाध्यायान्ते "रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभवः ॥ तत्सर्वं वः प्रवक्ष्यामि" इत्युक्तं तच्छ्रोतुकामा उपोद्घातं रचयन्त ऋषय ऊचुः—किमर्थमिति सार्धश्लोकेन । अगं पर्वतं स्त्यायति खर्वीकरोति स तथा । महासमर्थो मुनिः । किमर्थं कस्मै प्रयोजनाय रामचन्द्रस्य संनिधिमागतः । कथं केन प्रकारेण रामं विरजां दीक्षां कारयामास । किमर्थमित्यत्र "निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्" इति द्वितीया । राममित्यत्र 'हृक्रोरन्यतरस्याम्" इति द्वितीया ॥१॥ तत इति । दीक्षान्ते एवं पृष्टः सूतो रामसंनिधावगस्त्यागमने हेतुमाह—रावणेनेति । विलपन्परिदेवनं कुर्वन्नास । तस्थावित्यर्थः ॥ २ ॥ तामवस्थामाह—निर्निद्र इति । आसेति पूर्वेण संबन्धः । ततः सानुजो लक्ष्मणसहितः । प्राणान्मोक्तुं त्यक्तुमैच्छत् ॥ ३ ॥ लोपामुद्रापतिरगस्त्यः संसारस्य असारताम् ॥ ४ ॥

किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम्।
जडः किं नु विजानाति देहोऽयं पाञ्चभौतिकः॥ ५॥
निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः।
आत्मा न जायते नैव म्रियते न च दुःखभाक्॥ ६॥
सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः।
तथापि चाक्षुषैर्दोषैर्न कदाचिद्विलिप्यते॥ ७॥

---

योगजधर्मप्रत्यासत्त्या रामवृत्तान्तं ज्ञात्वा स्वयमेवागत्य लोकानुसारेण विलपन्तं रामं प्रत्यगस्त्य उवाच। हे राम, त्वं किं विषीदसि किंनिमित्तं शोचसि। ननु कान्तार्थं विषीदामीति चेत्तत्राह—कान्तेति। कस्य कान्तेति त्वया विचार्यताम्। भार्याविरहजं दुःखं किं देहस्याहोस्विदात्मन इति विकल्प्य प्रथमं पक्षं दूषयति—जडः किंन्विति। अयं पाञ्चभौतिकः पञ्चभूतकार्यं देहः। अतएव जडः किंनु विजानातीत्याक्षेपः। न जानातीत्यर्थः। प्रयोगश्च—देहो न ज्ञानाश्रयः भूतत्वाद्घटवत्, यदि ज्ञानाश्रयः स्यात्तर्हि भूतोऽपि स्यादिति पक्षे विबाधकतर्कसत्त्वात्॥ ५॥ ननु तर्हि आत्मन एव दुःखादिकमित्याशङ्कायामाह—निर्लेप इति। आत्मा न जायते नापि म्रियते नापि दुःखभाक्। तत्र दुःखाभावे हेतुः—निर्लेप इति। अतएव सच्चिदानन्दविग्रहः। जन्माभावे नाशाभावे च हेतुः—परिपूर्ण इति। "असङ्गो ह्ययं पुरुषः" "अविनाशी वा अरेऽयमात्मा" इत्यादिश्रुतेः॥ ६॥ निर्लेपतां दृष्टान्तेनोपपादयति सार्धेन। ननु देहयोगेनात्मनोऽपि दुःखादि प्रसज्येतेत्याशङ्क्याह—सूर्य इति। अत्र तथाशब्दाद्यथेत्याक्षिप्यते। यथा यद्यपीत्यर्थः। सूर्यः सर्वलोकस्य चक्षुष्ट्वेन चक्षुरधिष्ठातृत्वेन। तथाच श्रुतिः—"आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति। व्यवस्थितः तथापि चाक्षुषैश्चक्षुर्जन्यैर्दोषैर्न लिप्यते॥७॥

सर्वभूतान्तरात्मापि तद्वद्दुःखैर्न लिप्यते ।
देहोऽपि मलपिण्डोऽयमुक्तजीवो जडात्मकः ॥ ८ ॥
दह्यते वह्निना काष्ठैः शवाद्यैर्भक्ष्यतेऽपि वा ।
तथापि नैव जानाति विरहे तस्य का व्यथा ॥ ९ ॥
सुवर्णगौरी दूर्वाया दलंवच्छ्यामलापि वा ।
पीनोत्तुङ्गस्तनाभोगभुग्नसूक्ष्मावलग्नका ॥ १० ॥
बृहन्नितम्बजघना रक्तपादसरोरुहा ।
राकाचन्द्रमुखी बिम्बप्रतिबिम्बरदच्छदा ॥ ११ ॥

---

तद्वद्दुःखैर्न लिप्यते न संबध्यते। अस्मिन्नर्थे "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषै" रिति । एवमात्मनो निर्लेपत्वमनाद्यनन्तत्वं परिपूर्णत्वं प्रतिपाद्य वैराग्यार्थं पुनर्देहस्य जडत्वं विवृणोति—देहोऽपीति सार्धेन । अयं प्रत्यक्षो देहोऽपि । अपिशब्देन समीचीनतया भासमानोऽपि मलपिण्डः अमेध्यस्वरूपः । जीवो नाम जीवोपाधिर्लिङ्गदेहः । तथाच मुक्तो जीवो येन स तथा लिङ्गदेहविरहितः सन् । मृतः सन्नित्यर्थः ॥ ८ ॥ वह्निना कर्त्रा काष्ठैः करणभूतैर्दह्यते शिवा सृगालस्तदाद्यैर्भक्ष्यते । तथापि दग्धोऽपि शिवाद्यैर्भक्षितोऽपि नैव जानाति सुखदुःखादिकमिति शेषः । एवंभूतस्य जडस्य वियोगे का व्यथा ॥ ९ ॥ विरहे तस्य का व्यथेत्युक्तं तत्र तच्छब्दवाच्यस्य देहस्य दुर्निरूपत्वं प्रतिजानीते । सुवर्णगौरीत्यादिभिः सार्धैश्चतुर्भिः श्लोकैः—सुवर्णेति । आभोगो विस्तारः । तेन भुग्नं नम्रं सूक्ष्मं कृशमवलग्नं मध्यं यस्याः सा तथा ॥ १० ॥ बृहदिति । "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । बृहती नितम्बजघने यस्यास्तथोक्ता । रक्ते लोहिते पादावेव सरोरुहे यस्याः सा राका पूर्णिमा बिम्बं बिम्बफलं तस्य प्रतिबिम्बः सदृशः रदच्छद ओष्ठो

नीलेन्दीवरनीकाशनयनद्वयशोभिता ।
मत्तकोकिलसंलापा मत्तद्विरदगामिनी ॥ १२ ॥
कटाक्षैरनुगृह्णाति मां पञ्चेषुशरोत्तमैः ।
इति यां मन्यते मूर्खः स च पञ्चेषुशासितः ॥ १३ ॥
तस्या विवेकं वक्ष्यामि शृणुष्वावहितो नृप ।
नच स्त्री न पुमानेष न चैवायं नपुंसकः ॥
अमूर्तः पुरुषः पूर्णो द्रष्टा साक्षी सजीवनः ॥ १४ ॥
या तन्वङ्गी मृदुर्बाला मलपिण्डात्मिका जडा ।
सा न पश्यति यत्किंचिन्न शृणोति न जिघ्रति ॥ १५ ॥

---

यस्याः सा ॥ ११ ॥ नीलेति। नीलेन्दीवरस्य सदृशं नीलेन्दीवरनीकाशमित्यस्वपदविग्रहः। मयूरव्यंसकादित्वात्समासः। तथाविधनयनद्वयेन शोभिता। संलापो भाषणम् ॥ १२ ॥ कटाक्षैरिति। कटाक्षैरपाङ्गवीक्षणैः पञ्चेषुर्मदनस्तस्य शरेभ्योऽप्युत्तमैः। अनुगृह्णाति स्वकीयत्वेनाङ्गीकरोति। स पञ्चेषुणा शासितो वशीकृतः अतएव मूर्खः ॥ १३ ॥ तस्याः स्त्रिया विचारम्। अवहितो दत्तचित्तः। तस्या विवेकं वक्ष्यामीत्युक्तं तदेवाह—नचेति। तस्यास्तस्य च शरीरे चेतनत्वेनावस्थित एष परमात्मैव। स च न स्त्री न च पुमान् न वायं नपुंसकः। इमाः संज्ञा अवयविनामेव। अयममूर्तः परिच्छेदरहितः। अतएव पूर्णः द्रष्टा। ननु सर्वस्य द्रष्टृत्वे सुखदुःखादिप्रसङ्गः स्यादितिचेन्न। साक्षी निर्लेपः। जीवनं प्राणधारणं तस्य निर्वहितृत्वात् सजीवनः। यत्सत्तानुविद्धतया प्राणेन्द्रियादयः प्रवर्तन्त इति भावः। एतादृशः परमात्मा न शोकार्ह इति भावः ॥ १४ ॥ ननु जीवः परमात्मैव चेत्तं न शोचामि किंतु तदुपाधिं देहं शोचामीति चेन्मैवमित्याह—या तन्वङ्गीति। मलपिण्ड एव आत्मा स्वरूपं यस्याः सा या तवाभिमता सा न पश्यति। यत्किंचिन्न शृणोति न जिघ्रति।

चर्ममात्रा तनुस्तस्या बुद्ध्या वीक्षस्व राघव।
या प्राणादधिका सैव हन्त ते स्याद्धृणास्पदम् ॥ १६ ॥
जायन्ते यदि भूतेभ्यो देहिनः पाञ्चभौतिकाः।
आत्मा यदेकलस्तेषु परिपूर्णः सनातनः ॥ १७ ॥
का कान्ता तत्र कः कान्तः सर्व एव सहोदराः ॥ १८ ॥
निर्मितायां गृहावल्यां तदवच्छिन्नतां गतम्।
नभस्तस्यां तु दग्धायां न कांचित्क्षतिमृच्छति ॥ १९ ॥

---

अतः काष्ठवज्जडेति भावः ॥१५॥ चर्मेति। हे राघव, तस्यास्तनुर्देहः चर्ममात्रा तदन्तर्मांसरक्तादिकास्ति। न तत्र स्पृहणीयं किमप्यस्तीति बुद्ध्या वीक्षस्व आलोचय। आलोचनस्य फलमाह—येति। या प्राणादप्यधिका सा तवैव घृणास्पदं जुगुप्साविषयः स्यात्। तस्मात्स्त्र्यादिदेहमविचाररमणीयमिति भावः। जुगुप्सिते शोको न कार्य इति भावः ॥१६॥ शोकपरिहारे युक्त्यन्तरमाह—जायन्त इति सार्धेन। असंदिग्धेऽपि यदीति प्रयोगः यदि वेदाः प्रमाणमितिवत्। देहिनो नित्यस्यात्मनः पाञ्चभौतिकाः पञ्चमहाभूतविकारा देहा इत्यर्थः। भूतेभ्यो जायन्ते नत्वात्मनः सकाशात्। आत्मनो निर्विकारत्वात्। देहानां भूतकार्यत्वादचेतनत्वम्। तेषु परिपूर्ण आत्मा तु सनातन एकलश्च। औपाधिकनानात्वेऽपि वस्तुत एक एवेत्यर्थः। "आत्मा वा इदमेक एवाग्र आसीत्"। "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेः। यद्यस्मात्कारणादेकस्यात्मनो देहात्मनोः संबन्ध आविद्यक एवेति भावः ॥१७॥ केति। तत्र तथासति का कान्ता स्त्री। कान्तश्च पुमान् कः। न कोऽप्येवंविधो भेद इत्यर्थः। उपादानाद्ब्रह्मण औपाधिकानां जीवानामुपाधीनां देहानां च जातत्वात् सर्वे सहोदरा एव एकरूपा एवेत्यर्थः ॥ १८ ॥ ननु देहदृष्ट्या तु शोचामीति चेत्तत्राह—निर्मितायामिति। गृहावल्यां गृहपङ्क्तौ निर्मितायां सत्यां तदवच्छिन्नतां

तद्वदात्मापि देहेषु परिपूर्णः सनातनः।
हन्यमानेषु तेष्वेव स्वयं नैव विहन्यते ॥ २० ॥
हन्ता चेन्मन्यते हन्तुर्हतश्चेन्मन्यते हतम्।
तावुभौ न विजानीतो नायं हन्ति न हन्यते ॥ २१ ॥
अस्मान्नृपातिदुःखेन किं खेदस्यास्ति कारणम्।
स्वस्वरूपं विदित्वेदं दुःखं त्यक्त्वा सुखी भव ॥ २२ ॥

श्रीराम उवाच।

मुने देहस्य नो दुःखं नैव चेत्परमात्मनः।
सीतावियोगदुःखाग्निर्मां भस्मीकुरुते कथम् ॥ २३ ॥

---

त्तत्तद्गृहपरिच्छेद्यतां गतं नभः तस्यां गृहावल्यां दग्धायामपि कांचिदपि क्षतिं हानिं नच्छेति न प्राप्नोति ॥ १९ ॥ तद्वदात्मापि देहेषु हन्यमानेष्वपि न विहन्यत इति। एवं वस्तुजन्यत्वात्सर्वसहोदरदृष्ट्या वा अमेध्यदेहादिभङ्गेष्वधिष्ठानस्याभङ्गाद्वा न शोकस्यावसर इति भावः॥२०॥ ननु कोऽप्येवं न बुध्यते सर्वलोकोऽपि वध्यघातकपाल्यपालकादिव्यवहारेणैव प्रवर्तत इत्याशङ्क्याह—हन्तेति। हन्ता चेद्यद्यहं हन्तेति मन्यते। तु पुनः हतः पुरुषश्चेद्धन्तुः सकाशाद्धतमात्मानं मन्यते तर्हि तावुभावपि न विजानीतः। यतोऽयमात्मा न हन्ति न हन्यते च असङ्गत्वान्नित्यत्वाच्चेति भावः। एवं लौकिकः सर्वोऽपि व्यवहारो मिथ्यैव ॥ २१ ॥ अस्मादिति। अस्मादुक्तहेतोरित्यर्थः। हे नृप राजन्, अतिदुःखेन यः खेदः दैन्यं तस्य किं कारणमस्ति। न किमप्यस्तीत्यर्थः। इदं सच्चिदानन्दात्मकं स्वस्वरूपं विदित्वा सुखी भव ॥ २२ ॥ एवमगस्त्यस्योपदेशमाकर्ण्यासंभावनया पराभूतः श्रीराम उवाच—मुने इति त्रिभिः। हे मुने मननशील, देहस्य दुःखसंबन्धो नास्ति जडत्वाद्घटवत्। परमात्मनोऽप्यसङ्गत्वान्नैव चेत्तर्हि सीतावि-

सदानुभूयते योऽर्थः स नास्तीति त्वयेरितः।
जायतां तत्र विश्वासः कथं मे मुनिपुंगव ॥ २४ ॥
अन्योऽस्ति नास्ति को भोक्ता येन जन्तुः प्रतप्यते।
सुखस्य वापि दुःखस्य तद्ब्रूहि मुनिसत्तम ॥ २५ ॥

अगस्त्य उवाच।

दुर्ज्ञेया शांभवी माया तया संमोह्यते जगत्।
मायां तु प्रकृतिं विद्धि मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २६ ॥

---

योगदुःखमेवाग्निः। स्पष्टमन्यत् ॥२३॥ सदेति। यथा दुःखादिरर्थः सर्वैः सदानुभूयते स नास्तीति त्वयोक्तः तत्र त्वदुक्तौ मे विश्वासः कथं जायताम्। अग्निस्पर्शाद्दग्धहस्तस्य अग्निरनुष्ण इति वाक्ये कथं विश्वासो जायतामिति भावः ॥ २४ ॥ अन्य इति। शरीरस्य जडत्वे परमात्मनश्चाभोक्तृत्वे ताभ्यामन्येन भोक्त्रा भवितव्यम्। ताभ्यामन्यः कश्चिद्भोक्तास्ति नास्ति वेति विकल्प्य द्वितीयं पक्षं दूषयति। यद्यन्योऽपि नास्ति तर्हि सुखादेर्भोक्ता कस्तद्ब्रूहि। येन भोक्तृत्वेन जन्तुः शरीरी प्रतप्यते तापं प्राप्नोति। तथाच भोक्तुरपलापे प्रत्यक्षविरोध इति मोक्षशास्त्रानर्थक्यं च प्रसज्येतेति भावः ॥ २५ ॥ एवं पृष्टोऽगस्त्यो मायाया दुर्ज्ञेयत्वप्रतिपादनेन संशयं निराचिकीर्षुरगस्त्य उवाच—दुर्ज्ञेयेत्यादिना। शांभवीति शं सुखं तद्रूपो भवतीति शंभुस्तस्येयं शांभवीति विषयत्वमाधारत्वं वा षष्ठ्यर्थः। तथा न चिन्मात्रविषयं चिन्मात्राधारं वा त्रिगुणात्मकं सदसद्विलक्षणं भावरूपमज्ञानं सैव मायेत्युच्यते। चिन्मात्राधारत्वे प्रमाणभूतां श्रुतिमाह—मायां त्विति। तया मायया जगत् संमोह्यते। मोहस्वरूपमित्थम्। मायोपाधिकं चैतन्यमीश्वरः। मायाकार्येऽहंकारे प्रतिबिम्बितं

**सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।**
**तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः॥ २७॥**

चैतन्यं जीवः। स चौपाधिककर्तृत्वभोक्तृत्वप्रमातृत्वादिधर्मवान्। अतो नानुभवविरोधः नवा शास्त्रानर्थक्यं च। यत्तु आत्मा न भोक्तेति प्रागुक्तं तत्तु ईश्वरो न भोक्तेत्याशयेन। प्रतिबिम्बस्यापि भोक्तृत्वादिकं संनियोगशिष्टम्। अहंकारस्यापगमे कर्तृत्वादेरप्यपगमात्। तदुक्तम् "आत्मा कर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हि मुक्तताम्। नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः॥" इति अहंकारतादात्म्येनाहं सुखी दुःखी चेत्याद्यविवेकेन सर्वजगत्क्लिश्यतीति भावः॥ २६॥

श्रुत्युक्तमहेश्वरपदस्यार्थमाह—सत्येति। सत्यं कालत्रयाबाध्यं ज्ञानं नाम प्रकाश आत्मस्वरूपं यस्य स तथा अनन्तस्त्रिविधपरिच्छेदशून्यः। अतएव विभुर्व्यापकः। अतएवात्मा सर्वत्रानुभूत एवंविधो महेश्वर इत्युच्यते। मायावच्छिन्नत्वेऽपि महेश्वरत्वादनावृतज्ञान इत्यर्थः। श्रुत्युक्तोत्तरार्धस्यार्थमाह—तस्येति। लोक्यत इति लोकः जीवानां लोकः स तथा तस्मिन् जीवलोके प्राणिनां हृदये स्थितः। तस्यैव महेश्वरस्यांशः। प्रतिबिम्ब इत्यर्थः। जीव इत्युच्यते। "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।" "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"। "रूपंरूपं प्रतिरूपो बभूव"। "जीवेशावाभासेन करोति माया विद्या च स्वयमेव भवति" इत्याद्याः श्रुतयः। "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्याद्याः स्मृतयश्च प्रमाणम्। ननु "तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्" इत्युक्तत्वाज्जीवस्य व्यापकत्वं प्राप्तं तर्हि घटाद्यवच्छेदेनापि सुखादिभोगः स्यादित्याशङ्क्याह—हृदये स्थित इति। हृदयावच्छेदेनैव तस्य भोगः॥ २७॥

विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः।
अनादिकर्मसंबद्धास्तद्वदंशा महेशितुः।
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः॥ २८॥
मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम्।
अन्तःकरणमित्याहुस्तत्र ते प्रतिबिम्बिताः॥ २९॥
जीवत्वं प्राप्नुयुः कर्मफलभोक्तार एव ते।
ततो वैषयिकं तेषां सुखं वा दुःखमेव वा॥ ३०॥

---

नन्वहंकारस्यादित्वात्तदवच्छिन्नो जीवोऽपि सादिः स्यादित्याशङ्क्याह—विस्फुलिङ्गा इति। यथा विस्फुलिङ्गाः प्राक् सूक्ष्मरूपेणावस्थिताः सन्त एव काष्ठयोगतो जायन्ते व्यक्ता भवन्ति, तद्वदनादिकर्मभिर्वासनाभिश्च संबद्धास्तादात्म्यमापन्ना महेशितुरंशा जीवा अहंकारयोगतः प्राक् स्थिताः सन्त एवाभिव्यज्यन्ते। तथाच सूत्रम् "पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात्" इति॥ अयमर्थः संपन्नः। सृष्टेः प्रागनादिकर्मसंस्कारयुक्ता जीवा मायायां लीनाः सन्तः सृष्टिकालेऽहंकारावच्छिन्नाः सन्त एवाभिव्यज्यन्ते तेषां जीवानां तत्तदहंकारावच्छेदेनैव सुखदुःखादिभोगो नान्यावच्छेदेन" इति॥ २८॥ हृदये प्राणिनां स्थित इत्युक्तं तदेव हृदयशब्दस्य विवरणमाह—मनो बुद्धिरिति। मन इति बुद्धिरिति अहंकार इति चित्तमिति चतुष्टयमन्तःकरणस्यैव वृत्तिभेदा इत्याहुः। तत्रान्तःकरणे प्रतिबिम्बिता जीवा इत्युच्यन्ते। वृत्तिवृत्तिमतोरभेदविवक्षया मनोऽवच्छिन्ना बुद्ध्यवच्छिन्ना अहंकारावच्छिन्ना इति तत्रतत्रोच्यन्ते। अतो नानुपपत्तिः। अतएव "मन एव मनुष्याणां कारणं बन्धमोक्षयोः"। "बुद्धेर्गुणेनात्मगुणेन चैवम्" इति, तथा "शोकहर्षभयक्रोधलोभमोहस्पृहादयः। अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः। सर्वश्चित्तविलासोऽयम्" इत्यादिवाक्यानामेकवाक्यत्वं द्रष्टव्यम्॥ २९॥ अन्तःकरणे प्रतिबिम्बिता जीवाः कर्मभोक्तारस्त एव वैषयिकं सुखं

त एव भुञ्जते भोगायतनेऽस्मिञ्छरीरके ॥ ३१ ॥
स्थावरं जंगमं चेति द्विविधं वपुरुच्यते।
स्थावरास्तत्र देहाः स्युः सूक्ष्मा गुल्मलतादयः॥ ३२ ॥
अण्डजाः स्वेदजास्तद्वदुद्भिज्जा इति जंगमाः ॥ ३३ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुतम् ॥ ३४ ॥
सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते।
निर्लेपोऽपि परं ज्योतिर्मोहितः शंभुमायया ॥ ३५ ॥

---

दुःखं वा तेषामेव ॥ ३० ॥ त एवेति। तेषां व्यापकत्वेऽपि अस्मिन्भोगायतने शरीर एवान्तःकरणावच्छेदेन त एव सुखदुःखादि भुञ्जत इत्यर्थः ॥ ३१ ॥ प्रसङ्गाद्भोगायतनभूतानां शरीराणामवान्तरविभागमाह—स्थावरं जंगमं चेति। स्थातुं शीलमस्य स्थावरम्। गमनहीनमित्यर्थः। जंगम्यत इति जंगमम्। इत्थं वपुः शरीरं द्विविधम्। तत्र तयोर्भेदयोर्मध्ये ये स्थावरा देहास्ते सूक्ष्मा अतिमन्दा इत्यर्थः। के ते। गुल्मलतादयः ॥३२॥ जंगमानाह—अण्डजा इति। अण्डेभ्यो जाता अण्डजाः पक्षिसर्पादयश्च। स्वेदजा मशकादयः। उद्भिदन्ति भूमिमित्युद्भिदः तादृशाः सन्तो ये जायन्ते त उद्भिज्जाः पिपीलिकादयः। यद्वा जरायुमुद्भिद्य जायन्त इत्युद्भिज्जाः जरायुजा इत्यर्थः। अयमेवार्थः साधुः। "उद्भिदा यजेत पशुकामः" इत्यत्र लक्षणादोषप्रसक्तौ उद्भिच्छब्दो यागनामधेयमित्युक्तम्, तद्वज्जरायुजनामधेयमिति ज्ञेयम् ॥ ३३ ॥ एवं नानाविधदेहप्राप्तौ नियामकमाह—योनिमिति। देहिनः केनचित्पुण्येन शरीरत्वाय शरीरसंबन्धार्थं योनिं स्त्रीगर्भं प्रपद्यन्ते। अन्ये तु पापविशेषेण स्थाणुं स्थाणुप्रभृतिदेहं प्रपद्यन्त इति। तत्र नियामकमाह। यथाकर्म पुण्यापुण्यरूपं तदनतिक्रम्य। यथाश्रुतं वेदशास्त्राध्ययनसंस्कारमनतिक्रम्येत्यर्थः ॥ ३४ ॥ ननु शरीरत्वाविशेषबिम्बीभूतेश्वरस्यापि भोगः

कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च।
मोहश्चेत्यरिषड्वर्गमहंकारगतं विदुः ॥ ३६ ॥
स एव बध्यते जीवः स्वप्नजाग्रदवस्थयोः।
सुषुप्तौ तदभावाच्च जीवः शंकरतां गतः ॥ ३७ ॥
स एव मायया स्पृष्टः कारणं सुखदुःखयोः।
शुक्तौ रजतवद्विश्वं मायया दृश्यते शिवे ॥ ३८ ॥

---

स्यात्। शरीरस्य भोगायतनत्वात्। कारणे सति कार्यस्यावश्यकत्वादित्यत आह—सुख्यहमिति। यद्यपि जीवो निर्लेपः सुखदुःखादिसङ्गरहितः परंज्योतिः स्वप्रकाशस्तथापि शंभुमायया मोहितः सन् सुख्यहं दुःख्यहमिति स एवाभिमन्यते। अहंकारसमसत्ताकं सुखादिकमहंकारावच्छिन्नस्य प्रतिबिम्बस्यैव नेश्वरस्य। तथाच श्रुतिः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि। नहि यस्य माया तमेव वशीकरोतीति लोके ऐन्द्रजालिकादौ दृष्टमिति भावः ॥ ३५ ॥ कामक्रोधादयस्त्वहंकारनिबन्धना इत्याह—कामेति। कामोऽभिलाषः, क्रोधो द्वेषः, लोभः प्राप्तेऽपि नालंबुद्धिः, मदः स्तम्भः, मात्सर्यं परगुणासहनम्। मोहश्चाविवेकः। इममरिषड्वर्गमहंकारनिष्ठं विदुः। "कामः संकल्पः" इति श्रुत्यान्तःकरणस्यैते वृत्तिविशेषास्तथापि अहंकारस्य प्राधान्येनोक्तमहंकारगतमिति ॥ ३६ ॥ स इति। स एव जीवः स्वप्नजाग्रदवस्थयोरहंकारावच्छिन्न एव बध्यते। सुषुप्तौ तदभावादहंकाराभावात्। सूक्ष्मरूपेणावस्थानादित्यर्थः। अन्यथाहंकारनाशे जीवो ब्रह्मैव स्यात्। शंकरतां बिम्बसाम्यं गतः प्राप्तो भवतीत्यर्थः। "सता सौम्य तदा संपन्नो भवति" इत्यादिश्रुतेः ॥ ३७ ॥ ननु जीवस्याहंकाराद्युपादानतया ब्रह्मणश्च वियदाद्युपादानतया तयोः सविकारतापत्तिरित्याशङ्क्य परिणामित्वे ह्येवं स्यात्। इह तु विवर्ताधिष्ठाने नायं दोष इत्याह—स एवेति। जीवो मायया परिणामिन्या स्पृष्टः। कोऽर्थः। मायापरिणामोऽन्तःकरणं तेन विशिष्टः सन् सुख-

ततो विवेकज्ञानेन न कोऽप्यत्रास्ति दुःखभाक्।
ततो विरम दुःखात्त्वं किं मुधा परितप्यसे॥ ३९॥

श्रीराम उवाच।

मुने सर्वमिदं सत्यं यन्मदग्रे त्वयेरितम्।
तथापि न जहात्येतत्प्रारब्धाद्दष्टमुल्बणम्॥ ४०॥
मत्तं कुर्याद्यथा मद्यं नष्टाविद्यमपि द्विजम्।
तद्वत्प्रारब्धभोगोऽपि न जहाति विवेकिनम्॥ ४१॥
ततः किं बहुनोक्तेन प्रारब्धः स शिवः स्मरः।
बाधते मां दिवारात्रमहंकारोऽपि तादृशः॥ ४२॥

---

दुःखभाग्भवति। तेनान्तःकरणेनोपहितः सन् सुखदुःखयोः कारणमधिष्ठानं भवतीति भेदः। शिवे तु विशेषः। शिवे ब्रह्मणि विश्वं मायया दृश्यते शुक्तौ रजतवत्। तथा जीवस्य सुखदुःखाधिष्ठानत्वमहंकारावच्छिन्नत्वाद्भोक्तृत्वं चोपपद्यते। ईश्वरे तु विवर्ताधिष्ठानत्वेन न कोऽपि सुखदुःखादिसंबन्ध इति भावः॥३८॥ तत इति। तत आत्मनोऽसङ्गत्वादहंकारादेरध्यस्तत्वाच्च मम सुखदुःखादिसंबन्धो नास्तीत्येवंरूपेण विवेकपूर्वकज्ञानेन कोऽप्यत्र संसारे दुःखभाङ्नास्ति। तस्मात्त्वं मुधा व्यर्थं किं परितप्यसे। दुःखं त्यजेत्यर्थः॥ ३९॥ भवदुक्तरीत्या जडस्य सर्वस्य मिथ्यात्वेऽपि आत्मनोऽसङ्गत्वेऽपि निश्चिते तथापि शोको नापसर्पति तत्किमित्याशयेन श्रीराम उवाच—मुने इति। स्पष्टम्। तथाप्येतद्भुज्यमानफलं प्रारब्धं च तद्दृष्टं च तत्। उल्बणमपरिहार्यत्वात्प्रबलम्। मां न जहाति॥ ४०॥ मत्तमिति। नष्टा अविद्याऽज्ञानं यस्य स तं तादृशमपि। दार्ष्टान्तिकमाह—तद्वदिति॥ ४१॥ तत इति। बहुना युक्तायुक्तविचारेण किं। न किंचित्फलमित्यर्थः। प्रारब्धस्य जडत्वात्प्रारब्धप्रेरकः शिव एव। "फलमत्त उपपत्तेः" इत्यधिकरणे तु तथैव प्रति-

अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति।
तस्माज्जीवाप्तये मह्यमुपायः क्रियतां द्विज ॥ ४३ ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अगस्त्यराघवसंवादे वैराग्योपदेशो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

पादनात्। तथाच शिव एव मां दिवारात्रमहंकारानुप्रविष्टः सन् बाधते। "दुःखिते मनसि सर्वमसह्यम्" इति न्यायेन दुःखितमनस्के मयि त्वदुपदेशो न स्थेमानं धत्त इति भावः ॥४२॥ ननु निरन्तरं श्रवणमननादिभिर्ब्रह्मानुसंधाने कृते संसारानर्थनिवृत्त्यावाप्तब्रह्मानन्दो भविष्यतीति चेत्। "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इति बहुजन्मसाध्येन साक्षात्कारेण परिहरणीये संसारे कथं झटिति परोक्षज्ञानमात्रेण समस्तदुःखनिवृत्तिः स्यादित्याशयमाविष्कुर्वन्नाह—अत्यन्तेति। कुलजातिगुणक्रियाजन्यैरहंकारममकारादिभिरत्यन्तपीडितो जीवो लिङ्गशरीरं स्थूलदेहं विमुञ्चति त्यक्ष्यतीत्यर्थः। "वर्तमानसामीप्ये वर्तमानवद्वा" इति भविष्यत्यपि वर्तमानसामीप्ये लट्। तस्माद्धेतोः जीवाप्तये लिङ्गशरीरस्थैर्याय। मह्यं मदर्थं उपायो यत्नः क्रियतां भवतेति शेषः। अत्रेदमाकूतम्। ब्रह्मविष्णुशिवानामभेदेऽपि कदाचिच्छिवो विष्णुं विष्णुः शिवं तावुभौ कदाचिद्ब्रह्माणं कदाचिद्ब्रह्मा च तावुपदिशति। इदं तेषां लीलामात्रम्। अनावृतज्ञानस्येश्वरस्य मोहानुपपत्तेः। अतएव "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"। "नारायण एवाग्र आसीन्न ब्रह्मा न च शंकरः"। "जनितेन्द्रस्य जनितोत विष्णोः" इत्यादिश्रुतीनां नहिनिन्दान्यायेन लीलाविग्रहविशेषप्रशंसापरत्वमेव तात्पर्यं ज्ञातव्यम्। रामस्य शोकादिकं तदप्यज्ञजनानुकरणमात्रमभियुक्तान्प्रत्युपदेशमाहात्म्यंच गुरोः प्रकथितुमिति दिक् ॥४३॥

इति श्रीशिवगीताबालानन्दिनीव्याख्यायां द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः ३

अगस्त्य उवाच।

न गृह्णाति वचः पथ्यं कामक्रोधादिपीडितः।
हितं न रोचते तस्य मुमूर्षोरिव भेषजम् ॥ १ ॥
मध्येसमुद्रं या नीता सीता दैत्येन मायिना।
आयास्यति नरश्रेष्ठ सा कथं तव संनिधिम् ॥ २ ॥
बध्यन्ते देवताः सर्वा द्वारि मर्कटयूथवत्।
किंच चामरधारिण्यो यस्य सन्ति सुराङ्गनाः ॥ ३ ॥
भुङ्क्ते त्रिलोकीमखिलां यः शंभुवरदर्पितः।
निष्कण्टकं तस्य जयः कथं तव भविष्यति ॥ ४ ॥

---

श्रीरामं निमित्तीकृत्य परमपुरुषार्थसाधन उपदिष्टेऽपि तद्विमुखो बहिर्मुखो लोको नान्तर्मुखतां लभत इति लोकस्थितिरौत्सर्गिक्येव-मेवेत्याशयेनागस्त्य उवाच—न गृह्णातीति। कामक्रोधादिभिर्बहि-र्मुखो गुरूपदिष्टं वचः पथ्यमपि परिणामेऽमृतमपि। अतएव हित-मिष्टकारि न गृह्णाति। दैववशाद्गृहीतमपि तस्य तस्मा इत्यर्थः। न रोचते। दृष्टान्तमाह—मुमूर्षोरिति ॥ १ ॥ ननु ज्ञाने महाप्रयासोऽ-स्तीति मां प्रतिभाति। "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः स मोक्षकैः" इत्यमरः। त्रिवर्गस्तु संपादनीय इति. रावणं हत्वा सीतां प्राप्य त्रि-वर्ग एवानुष्ठेय इतिचेत्तत्र ततोऽप्यधिकः प्रयासोऽस्तीति प्रतिपादय-न्नाह—मध्येसमुद्रमिति। "पारेमध्ये षष्ठया वा" इत्यव्ययीभावः। दैत्येन रक्षसा मायिना कपटिना ॥२॥ तस्य प्रतापमाह—बध्य-न्त इति। ताड्यन्ते। किंचेति स्त्रीसौख्यमपि तादृशमिति भावः ॥ ३ ॥ निष्कण्टकं निःसपत्नम्। अभेदविवक्षया शंभुर्ब्रह्मा शिवश्च तयोर्वरेण दर्पितो गर्वितः। तस्य रावणस्य त्वत्कर्तृकस्तत्कर्मको जय

इन्द्रजिन्नाम पुत्रो यस्तस्यास्तीशवरोद्धतः ।
तस्याग्रे सङ्गरे देवा बहुवारं पलायिताः ॥ ५ ॥
कुम्भकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः ।
अन्यो दिव्यास्त्रसंयुक्तश्चिरंजीवी विभीषणः ॥ ६ ॥
दुर्गं यस्यास्ति लङ्काख्यं दुर्जयं देवदानवैः ।
चतुरङ्गबलं यस्य वर्तते कोटिसंख्यया ॥ ७ ॥
एकाकिना त्वया जेयः स कथं नृपनन्दन ।
आकाङ्क्षते करे धर्तुं बालश्चन्द्रमसं यथा ॥ ८ ॥
तथा त्वं काममोहेन जयं तस्याभिवाञ्छसि ॥ ९ ॥

श्रीराम उवाच ।

क्षत्रियोऽहं मुनिश्रेष्ठ भार्या मे रक्षसा हृता ।
यदि तं न निहन्म्याशु जीवने मेऽस्ति किं फलम् ॥१०॥

---

इत्यर्थः ॥ ४ ॥ इन्द्रजिदिति । ईशवरेणोद्धतो गर्वितः । पलायिताः पलायनं कृतवन्त इत्यर्थः ॥ ५ ॥ कुम्भकर्णेति । सुरसूदनो देवानां क्षोभकः । अन्यः कुम्भकर्णादपरो विभीषणः । चिरंजीवीति भाविवरदानेनोक्तम् ॥ ६ ॥ दुर्गमिति । दुर्गं जले विषमस्थानम् । दुर्जयं जेतुमशक्यम् । चत्वारि अङ्गानि हस्त्यश्वरथपदातिरूपाणि यस्य तत्तथा बलं सैन्यं कोटिसंख्यया उपलक्षितं सद्वर्तते । कोट्य इत्येव गणनीयं नतु कोटिमात्रेण परिच्छेद्यमित्यर्थः ॥७॥ एकाकिनेति । असहायेन स प्रतिपक्षो रावणः ससहायः कथं केन प्रकारेण जेयः त्वदुद्योगस्त्वकिंचित्कर इत्याह—आकाङ्क्षत इति । यथा बालश्चन्द्रमसं करे धर्तुमाकाङ्क्षते तथा त्वं काममोहेन । कामप्रयुक्ताविवेकेनेत्यर्थः ॥८॥ तस्य रावणस्य ॥९॥ नाहं ज्ञानाधिकारी वैराग्याभावादिति लोकरीतिं विडम्बयन् श्रीराम उवाच । अन्येनान्यस्य बलाद्भार्यापहृता चेत्तं दस्युं हत्वा तस्य भार्या विमोक्षणीया किमुत स्वस्य । यतः क्षत्रियोऽहं क्षतात्त्रायत इति क्षत्रियः । यदि तं रावणमाशु शीघ्रं

अतस्ते तत्त्वबोधेन न मे किंचित्प्रयोजनम् ।
कामक्रोधादयः सर्वे दह्यते तैस्तनुर्मम ॥ ११ ॥
अहंकारोऽपि मे नित्यं जीवनं हन्तुमुद्यतः ॥ १२ ॥
हृतायां निजकान्तायां शत्रुणाऽवमतस्य वा ।
यस्य तत्त्वबुभुत्सा स्यात्स लोके पुरुषाधमः ॥ १३ ॥
तस्मात्तस्य वधोपायं लङ्घयित्वाम्बुधिं रणे ।
ब्रूहि मे मुनिशार्दूल त्वत्तो नान्योऽस्ति मे गुरुः ॥१४॥

अगस्त्य उवाच ।

एवं चेच्छरणं याहि पार्वतीपतिमव्ययम् ।
स चेत्प्रसन्नो भगवान्वाञ्छितार्थं प्रयच्छति ॥ १५ ॥

---

न हन्मि तदा मम जीवने किं फलमस्ति । स वा हन्तव्यो मया वा मर्तव्यमिति भावः ॥ १० ॥ अत इति । ते तत्त्वबोधेन । त्वया क्रियमाणेनोपदेशेनेत्यर्थः । मे किमपि प्रयोजनं नास्ति । कामक्रोधादयो ये सर्वे रजस्तमोविकारास्तैः । तनुर्देहः ॥ ११ ॥ किंच । अहंकार इति । क्षत्रियोऽहमित्यादि गर्वोऽपि मे मम जीवनं प्राणधारणं हन्तुमुद्यतस्तस्मादलं श्रवणादिनेति भावः ॥ १२ ॥ ननु विषयदोषदर्शनेन विरक्तः सन् श्रवणादि कुर्यात् । विरक्तस्यैव तत्त्वबुभुत्सायामधिकार इति चेन्नेत्याह—हृतायामिति । निजकान्तायां शत्रुणा हृतायां सत्यां वा शत्रुणा अवमतस्य तिरस्कृतस्य यस्य तत्त्वबुभुत्सा तत्त्वं बोद्धुमिच्छा स्यात्स लोके पुरुषाधमः । देहादिष्वनित्याशुचिदुःखरूपत्वादिबुद्ध्या वैराग्यवत एव मोक्षशास्त्रेऽधिकारः । अन्ये तु प्रतिष्ठार्थं तच्छास्त्रं पठन्तीति रामोक्त्या सूचितम् ॥ १३ ॥ तस्मादिति । अम्बुधिं लङ्घयित्वा रणे तस्य रावणस्य वधे उपायं त्वत्तः त्वां विनेत्यर्थः ॥ १४ ॥ यस्य तत्त्वज्ञानमुपदेष्टव्यमेवेति निश्चयस्तेन गुरुणापि तच्छन्दानुरोधेन वर्तितव्यमिति लौकिकीं रीति-

देवैरजेयः शक्राद्यैर्हरिणा ब्रह्मणापि वा ।
स ते वध्यः कथं वा स्याच्छंकरानुग्रहं विना ॥ १६ ॥
अतस्त्वां दीक्षयिष्यामि विरजागममाश्रितः ।
तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भव ॥ १७ ॥
येन हत्वा रणे शत्रून्सर्वान्कामानवाप्स्यसि ।
भुक्त्वा भूमण्डलं चान्ते शिवसायुज्यमाप्स्यसि ॥ १८ ॥

सूत उवाच ।

अथ प्रणम्य रामस्तं दण्डवन्मुनिसत्तमम् ।
उवाच दुःखनिर्मुक्तः प्रहृष्टेनान्तरात्मना ॥ १९ ॥

श्रीराम उवाच ।

कृतार्थोऽहं मुने जातो वाञ्छितार्थो ममागतः ।
पीताम्बुधिः प्रसन्नस्त्वं यदि मे किमु दुर्लभम् ।
अतस्त्वं विरजादीक्षां ब्रूहि मे मुनिसत्तम ॥ २० ॥

---

मनुसरन्नगस्त्य उवाच—एवमिति । एवं चेच्छत्रुवध एवावश्यं कर्तव्यश्चेत्तर्हि अव्ययमविनाशं पार्वतीपतिं शरणं याहि । स प्रसन्नश्चेत्तर्हि ॥१५॥ त्वयैव प्रसादः क्रियतामिति चेत्तत्राह—देवैरिति । ते त्वया वध्यः हन्तुं शक्यः कथं केन प्रकारेण ॥१६॥ अत इति । विरजागमं विरजादीक्षाप्रतिपादकं शास्त्रमाश्रितः सन् दीक्षयिष्यामि । दीक्षावन्तं करिष्यामीत्यर्थः । तेन मार्गेणोपायेन मर्त्यत्वमितरसाधारण्यं हित्वा । तेजोमयः शुद्धदेहो भव । आशिषि लोट् ॥ १७ ॥ येनेति । येन दीक्षासंस्कारेण शत्रून्हत्वा सर्वान्कामानवाप्स्यसि । किंच भूमण्डलं भुक्त्वाऽनुभूयान्ते शिवसायुज्यमपरमुक्तिं प्राप्स्यसि । उपासनाभिर्मुक्तयस्तु सारूप्यादय एव भवन्ति ज्ञानेन कैवल्यरूपा मुक्तिरिति भावः ॥ १८ ॥ सूत उवाच—अथेति । अगस्त्यवाक्यश्रवणानन्तरम् ॥ १९ ॥ कृतार्थ इति । आगतः सिद्धः । तस्य मा-

अगस्त्य उवाच।

शुक्लपक्षे चतुर्दश्यामष्टम्यां वा विशेषतः।
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ॥ २१ ॥
यं वाममाहुर्यं रुद्रं शाश्वतं परमेश्वरम्।
परात्परं परं चाहुः परात्परतरं शिवम्।
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ॥ २२ ॥
ध्यात्वाग्निनावसथ्याग्निं विशोध्य च पृथक्पृथक्।
पञ्चभूतानि संयम्य दग्ध्वा गुणविधिक्रमात् ॥ २३ ॥

---

हात्म्यमाह—पीताम्बुधिरिति। चुलकितसिन्धुः। तवानुग्रहे सति सिन्धुतरणादिकं सर्वं मदिष्टं शेत्स्यतीति भावः। अत इति। यतः शिवप्रसादहेतुर्दीक्षा अतः कारणादित्यर्थः ॥ २० ॥ अगस्त्य उवाच—शुक्लपक्ष इति। यस्मिन्कस्मिन्वा मासे शुक्लपक्षे चतुर्दश्याद्युक्ततिथिषु आर्द्रायुक्तसोमवारे वा दीक्षां समारभेत्। परस्मैपदमार्षम् ॥२१॥ यमिति। यं देवमित्थमाहुस्तं ध्यात्वा व्रतं चरेदिति वक्ष्यमाणेनान्वयः। वामं सुन्दरं श्रेष्ठं वा। रुद्रं रुदन्तीति रुदः संसारिणस्तान् राति कृपयानुगृह्णातीति रुद्रस्तं परात्परं जगन्नियन्तारम्। परात्परतरं ब्रह्मादिवन्द्यम्। ब्रह्मविष्णवादिवाच्यानां सकललीलाविग्रहाणां मूलभूतमित्यर्थः। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतेः। अतएव सदाशिवं पूर्णानन्दात्मना व्यवस्थितम् ॥ २२ ॥ ध्यात्वेति। एवंविधं शिवं ध्यात्वेति पूर्वागमनेनोक्तं भवति। भूतशुद्धिप्रकारमाह—ध्यात्वेत्यादिना। अग्निनाग्निबीजेनेत्यर्थः। आवसथ्याग्निं ध्यात्वा पञ्चभूतानि स्वदेहारम्भकाणि पृथक्पृथक् वायुबीजेन विशोध्य विशोषयित्वा तानि पञ्चभूतानि संयम्यावसथ्याग्निना गुणविधिक्रमाच्छब्दादिगुणपूर्वकं तेन क्रमेणेत्यर्थः। दग्ध्वा ध्यात्वा स्वस्वगुणपूर्वकं तानि भूतानि दग्धानीति भावयित्वेत्यर्थः ॥ २३ ॥

मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्ततः परम् ।
एकमात्रममात्रं च द्वादशान्तव्यवस्थितम् ॥ २४ ॥
स्थित्यां स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥ २५॥
इदं व्रतं पाशुपतं कथयिष्ये समासतः ।
प्रातरेव तु संकल्प्य निधायाग्निं स्वशाखया ॥ २६ ॥
उपोषितः शुचिः स्नातः शुक्लाम्बरधरः स्वयम् ।
शुक्लयज्ञोपवीतश्च शुक्लमाल्यानुलेपनः ॥ २७ ॥
जुहुयाद्विरजोमन्त्रैः प्राणापानादिभिस्ततः ।
अनुवाकान्तमेकाग्रः समिदाज्यचरून्पृथक् ॥ २८ ॥

---

तमेव क्रमं स्फुटमाह—मात्रा इति । रूपरसगन्धस्पर्शशब्दतन्मात्रा इत्यर्थः । अयं भावः । पृथिवी पञ्चमात्रा । आपश्चतुर्मात्राः । तेजस्त्रिमात्रम् । वायुर्द्विमात्रः । आकाश एकमात्र इति । तथाच पूर्वपूर्वस्योत्तरोत्तरं प्रत्युपादानतया तदीयानां गुणानामप्युत्तरोत्तरमन्वयादिति भावः । अमात्रमिति । अहंकारमहत्तत्त्वमायानामेकतत्वेन ग्रहणं तच्चामात्रम् । अव्यक्तगुणभेदत्वाद्रूपादितन्मात्ररहितमित्यर्थः । तत्कीदृशम् । द्वादशान्तव्यवस्थितं पञ्चतन्मात्ररूपाः शब्दादयः पञ्चमहाभूतानि अहंकारमहत्तत्त्वमायाख्यमेकं एवमेकादश तत्त्वानि एषामाधारः परमात्मा द्वादशः । स एवान्तो लयावधिरिति द्वादशान्तस्तस्मिन् व्यवस्थितं प्रविलापेनावस्थितं ध्यात्वेत्यर्थः ॥ २४ ॥ स्थित्यां स्थाप्येति । तदनन्तरममृतबीजेन तद्ध्यानपूर्वकं पुनः सर्वलयाधाराद्ब्रह्मणः सृष्टिक्रमेण पञ्चीकरणपूर्वकं पूर्ववद्देहस्थित्यां तानि तत्त्वान्यवस्थाप्य अमृतो भूत्वा । दिव्यदेहो भूत्वेत्यर्थः । पाशुपतं व्रतं चरेदिति भूतशुद्धिप्रकार उदाहृतः ॥२५॥ इदं व्रतमिति । समासतः संक्षेपेण संकल्प्य संकल्पं कृत्वा स्वशाखया स्वशाखोक्तविधिनाग्निं प्रतिष्ठाप्येत्यर्थः ॥ २६ ॥ उपोषित इति । स्पष्टम् ॥ २७ ॥ जुहुयादिति । त-

आत्मन्यग्निं समारोप्य याते अग्नेति मन्त्रतः ।
भस्मादायाग्निरित्याद्यैर्विमृज्याङ्गानि संस्पृशेत् ॥ २९ ॥
भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः ।
पापैर्विमुच्यते नित्यं मुच्यते न च संशयः ॥ ३० ॥
अग्निवीर्यं यतो भस्म वीर्यवान्भस्मसंयुतः ।
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ॥ ३१ ॥
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ।
एवं कुरु महाराज शिवनामसहस्रकम् ॥ ३२ ॥
इदं तु संप्रदास्यामि तेन सर्वमवाप्स्यसि ॥ ३३ ॥

---

तस्तदनन्तरं एकाग्रः स्वस्थः सन् समिदाज्यचरूनिति द्रव्यत्रयं पृथक्पृथगनुवाकान्तं अनुवाकसमाप्तिपर्यन्तं जुहुयात् । "प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳस्वाहा" इत्यादयो विरजामन्त्रा अनुसंधेयाः ॥ २८ ॥ आत्मनीति । "या ते अग्ने यज्ञिया तनूः" इत्यादिमन्त्रेणाग्निमात्मनि समारोप्य । ततो हुतस्याग्नेर्भस्मादाय गृहीत्वा "अग्निरिति भस्म" इत्यादिमन्त्रैर्विमृज्य अभिमन्त्र्य तेन भस्मनाङ्गानि ललाटादीनि संस्पृशेत् । तेषु भस्मधारयेदित्यर्थः । अग्न इति वक्तव्ये अग्नेतीति संधिरार्षः । "अग्निरित्यादिभिर्मन्त्रैः शुद्धं भस्माभिमन्त्रितम् । शिवमन्त्रेण वा धार्यं गायत्र्या प्रणवेन वा ।" एतच्च भस्मधारणं सर्वकर्माङ्गम् । "न तद्ध्यानं न तद्दानं न तज्ज्ञानं जपो न सः । त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम्" इति । विस्तरस्त्वाकरे द्रष्टव्यः ॥ २९ ॥ भस्मेति । छन्नो लिप्ताङ्ग आदौ पापैर्विमुच्यते ततो ज्ञानेन संसारादपि मुच्यते । न संशय इति महापापेभ्यः कथं प्रमुच्यत इति संशयो न कार्यः । भस्मसामर्थ्यं वाचामगोचरमिति भावः ॥ ३० ॥ ३१ ॥ एवं कुर्विति । एवं प्रागुक्तरीत्या भस्मधारणं कुर्वित्यर्थः ॥ ३२ ॥ इदमिति । इदं बु-

सूत उवाच।

इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम्।
वेदसाराभिधं नित्यं शिवप्रत्यक्षकारकम् ॥ ३४ ॥
उक्तं च तेन राम त्वं जप नित्यं दिवानिशम्।
ततः प्रसन्नो भगवान्महापाशुपतास्त्रकम्।
तुभ्यं दास्यति तेन त्वं शत्रून्हत्वाप्स्यसि प्रियाम् ॥ ३५ ॥
तस्यैवास्त्रस्य माहात्म्यात्समुद्रं शोषयिष्यसि।
संहारकाले जगतामस्त्रं तत्पार्वतीपतेः ॥ ३६ ॥
तदलाभे दानवानां जयस्तव सुदुर्लभः।
तस्माल्लब्धुं तदेवास्त्रं शरणं याहि शंकरम् ॥ ३७ ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे अगस्ति-राघवसंवादे विरजादीक्षानिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

द्धिस्थं सर्वं सर्वार्थप्रयोजनम् ॥ ३३ ॥ सूत उवाच—इत्युक्त्वेति। वेदसार इत्याख्या नामास्येति ॥ ३४ ॥ उक्तं चेति। तेनागस्त्येन उक्तं च। किमुक्तं तदेवाह। हे राम, दिवानिशं इदं जप। तदपि न कस्मिंश्चिदहोरात्रे किंतु सर्वेष्वित्याह—नित्यमिति। ततः सहस्रनामजपात्पाशुपतसंज्ञकमस्त्रं तेनास्त्रेण रावणादीन्हत्वा प्रियां भार्यामवाप्स्यसि ॥ ३५ ॥ तस्यैवेति। संहारेति। संहारे तदेवास्त्रं प्रायेणार्हमित्यर्थः ॥ ३६ ॥ तदलाभ इति। कर्तुः शेषत्वविवक्षायां तवेति षष्ठी तेन 'न लोक—' इति न निषेधः। उपसंहरति—तस्मादिति ॥ ३७ ॥ इति श्रीशिवगीताबालानन्दिनीव्याख्यायां तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४

श्रीसूत उवाच ।

एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन्निजाश्रमम् ।
अथ रामगिरौ रामः पुण्ये गोदावरीतटे ॥ १ ॥
शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ।
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ॥ २ ॥
अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसंभवैः ।
अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि ॥ ३ ॥
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ।
नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः ॥ ४ ॥
मासमेकं फलाहारो मासं पर्णाशनः स्थितः ।
मासमेकं जलाहारो मासं च पवनाशनः ॥ ५ ॥
शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेवं महेश्वरम् ।
हृत्पङ्कजे समासीनमुमादेहार्धधारिणम् ॥ ६ ॥

---

ततः किं वृत्तमिति शुश्रूषून्मुनीन्प्रति सूत उवाच—एवमिति । तस्मिन्नगस्त्ये । अथानन्तरम् ॥ १ ॥ शिवलिङ्गमिति । यथाविधि पूर्वाध्यायोक्तविधिमनतिक्रम्य दीक्षां कृत्वा स्थित इति पञ्चमश्लोकस्थेन सहान्वयः । कीदृशः स इत्याकाङ्क्षायां विशेषणानि भूतिभूषितेत्यादीनि ॥ २ ॥ अभिषिच्येति । स्वयं प्रतिष्ठापितं लिङ्गं गौतमीगोदावरी सा सिन्धुर्नदी तत्प्रभवैर्जलैरभिषिच्य । वन्यानि वने जातानि तैः । स्पष्टमन्यत् ॥३॥ भस्मच्छन्न इति । भस्मना छन्नो दिग्धः । नक्तंदिवमहोरात्रम् । 'अचतुर—' इति निपातनात्साधुः । अनन्यधीः न विद्यतेऽन्यस्मिन्धीर्यस्य स तथा शिवैकनिष्ठ इत्यर्थः ॥४॥ ॥५॥ शान्त इति । शान्तो मनोनिग्रहवान् । दान्तो बहिरिन्द्रियनि-

चतुर्भुजं त्रिनयनं विद्युत्पिङ्गजटाधरम्।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ७ ॥
सर्वाभरणसंयुक्तं नागयज्ञोपवीतिनम्।
व्याघ्रचर्माम्बरधरं वरदाभयधारिणम् ॥ ८ ॥
व्याघ्रचर्मोत्तरीयं च सुरासुरनमस्कृतम्।
पञ्चवक्त्रं चन्द्रमौलिं त्रिशूलडमरूधरम् ॥ ९ ॥
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम्।
एवं नित्यं प्रजपतो गतं मासचतुष्टयम् ॥ १० ॥
अथ जातो महानादः प्रलयाम्बुधिभीषणः।
समुद्रमथनोद्भूतमन्दरावनिभृद्ध्वनिः ॥ ११ ॥

---

ग्रहवान्। एवं नियमाविष्टः सन्महेश्वरं ध्यायन्। कीदृशम्। हृत्पङ्कज इत्यादिभिर्विशिनष्टि ॥ ६ ॥ चतुर्भुजमिति। विद्युत्तडित्तद्वत्पिङ्गानां जटानां धरम्। कोटिसंख्याकाः सूर्यास्तैः सदृशमित्यर्थः ॥७॥ सर्वाभरणमिति। नाग एव यज्ञोपवीतं तदस्यास्तीति तम्। व्याघ्रचर्मैवाम्बरं तद्धरतीति तम्। वरदाभयमुद्राङ्कितौ हस्तौ धर्तुं शीलमस्येति तम् ॥ ८ ॥ व्याघ्रेति। त्रिशूलं च डमरुश्च त्रिशूलडमरू तौ धरं धारयन्तम्। "कर्तृकर्मणोः कृति—" इति सूत्रेण कर्मणि षष्ठी तु न भवति। आर्षत्वाद्वा ॥९॥ नित्यमिति। शाश्वतं शश्वदेकस्वभावम्। शुद्धं कल्पितधर्मरहितं ध्रुवं परिणामशून्यम्। अक्षरं अपक्षयरहितं अव्ययं ध्वंसाप्रतियोगिनं नित्यं प्रागभावाप्रतियोगिनं तथाच षड्भावविकारहीनमिति भावः। एवं ध्यायतः प्रजपतो रामस्य मासचतुष्टयं गतं अत्यगादित्यर्थः ॥ १० ॥ अथ मासचतुष्टयानन्तरम्। अम्बुधिशब्देन तच्छब्दो लक्ष्यते। तद्वद्भीषणः। समुद्रमथने उद्धृतः परिवर्तितो यो मन्दरावनिभृन्मन्दरगिरिस्तद्ध्वनिसदृशः ॥ ११ ॥

रुद्रबाणाग्निसंदीप्तभृशत्रिपुरविभ्रमः।
तमाकर्ण्याथ संभ्रान्तो यावत्पश्यति पुष्करम्।
तावदेव महातेजो रामस्यासीत्पुरो द्विजाः॥ १२॥
तेजसा तेन संभ्रान्तो नापश्यत्स दिशो दश।
अन्धीकृतेक्षणस्तूर्णं मोहं यातो नृपात्मजः॥ १३॥
विचिन्त्य तर्कयामास दैत्यमायां द्विजेश्वराः।
अथोत्थाय महावीरः सज्यं कृत्वा धनुः स्वकम्॥ १४॥
अविध्यन्निशितैर्बाणैर्दिव्यास्त्रैरभिमन्त्रितैः।
आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतम्॥ १५॥
विष्णुचक्रं महाचक्रं कालचक्रं च वैष्णवम्।
रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशानिलम्॥ १६॥
भार्गवादिबहून्यस्त्राण्ययं प्रायुङ्क्त राघवः॥ १७॥

---

रुद्रेति। रुद्रस्य बाणाग्निना संदीप्तं भृशं संदीप्तबहुलं त्रिपुरं तस्य यो विभ्रमः महासंरम्भः तं करोतीति तथाभूतो नादो जात इति पूर्वेणान्वयः। 'तत्करोति' इति ण्यन्तात्पचाद्यच्। तमिति। अथ महानादोत्पत्त्यनन्तरं तं नादमाकर्ण्य श्रुत्वा संभ्रान्तो जातः "समौ संवेगसंभ्रमौ" इत्यमरः। भयादिना कर्मस्वपाटवं संवेग इति क्षीरस्वामी। यावत्पुष्करं गोदावरीजलं तत्रैव प्रक्रान्तत्वात्। "पुष्करं सर्वतोमुखम्" इत्यमरः। तज्जलं लक्षीकरोति तावत्॥ २१॥ तेजसेति। संभ्रान्तो व्याकुलः। अन्धीकृते ईक्षणे नेत्रे यस्य स तथा। एवंभूतः सन् तूर्णं शीघ्रं मोहं यातः प्राप्तः॥ १३॥ विचिन्त्येति। हे द्विजेश्वराः, रामो विचिन्त्य मनसि विचार्य। एषा दैत्यमायेत्यूहितवान्। अथ महावीरो रामः स्वकमात्मीयं धनुः सज्यं सगुणं कृत्वा॥१४॥ अविध्यदिति। दिव्यास्त्राणि। तान्येवाह—आग्नेयमिति। तत्तद्देवताकान्यस्त्राणीत्यर्थः॥१५॥ प्रायुङ्क्त प्रयुक्तवानित्यर्थः॥१६॥१७॥

तस्मिंस्तेजसि शस्त्राणि चास्त्राण्यस्य महीपतेः ।
विलीनानि महाभ्रस्य करका इव नीरधौ ॥ १८ ॥
ततः क्षणेन जज्वाल धनुस्तस्य कराच्च्युतम् ।
तूणीरं चाङ्गुलित्राणं गोधिकापि महीपतेः ॥ १९ ॥
तद्दृष्ट्वा लक्ष्मणो भीतः पपात भुवि मूर्च्छितः ।
अथाकिंचित्करो रामो जानुभ्यामवनिं गतः ॥ २० ॥
मीलिताक्षो भयाविष्टः शंकरं शरणं गतः ।
स्वरेणाप्युच्चरन्नुच्चैः शंभोर्नामसहस्रकम् ॥ २१ ॥
शिवं च दण्डवद्भूमौ प्रणनाम पुनः पुनः ।
पुनश्च पूर्ववच्चासीच्छब्दो दिङ्मण्डलं स्वनन् ।
चचाल वसुधा घोरं पर्वताश्च चकम्पिरे ॥ २२ ॥
अथ क्षणेन शीतांशुशीतलं तेज आदधत् ।
उन्मीलिताक्षो रामस्तु यावद्यावत्प्रपश्यति ॥ २३ ॥

---

तस्मिन्निति। महाभ्रस्य महामेघस्य संबधिन्यः करका वर्षोपला नीरधाविवेति दृष्टान्तः ॥ १८ ॥ तत इति । तस्य रामस्य कराच्च्युतं सज्जज्वाल । तथा तूणीरं निषङ्गः । अङ्गुलित्राणं च गोधिकापि ज्याघातवारणार्थं कृतं चर्ममयं तलं च जज्वालेत्यनुषज्यते ॥ १९ ॥ तदिति । तत्तेजसा धनुरादिज्वलनम् । अथानन्तरं न किंचित्करोतीत्यकिंचित्करः सन् ॥ २० ॥ मीलिताक्ष इति । शरणं रक्षितारं गतः प्राप्तः । किं कुर्वन् । उच्चैःस्वरेणापि शंभोर्नामसहस्रकं उच्चरन्नुच्चारयन्नित्यर्थः ॥ २१ ॥ शिवं चेति । पुनश्चेति । दिशां मण्डलं स्वनन्स्वानयन्नित्यर्थः । अन्तर्भावितण्यर्थाच्छतृप्रत्ययः । घोरं भयंकरं यथा तथा ॥ २२ ॥ अथेति । राम उन्मीलिताक्षः सन् शीतांशुश्चन्द्रस्तद्वच्छीतलं तेज आदधदासमन्ताद्बिभ्रत् । तथापि यावत्स्वचक्षुर्ग्राह्यपरिमाणकं यथा स्यात्तथा । सर्वस्य महीतुमशक्यत्वात् । यावत्प्र-

तावद्ददर्श वृषभं सर्वालंकारसंयुतम्।
पीयूषमथनोद्भूतनवनीतस्य पिण्डवत्॥ २४॥
प्रोतस्वर्णं मरकतच्छायाशृङ्गद्वयाञ्चितम्।
नीलरत्नेक्षणं ह्रस्वकण्ठकम्बलभूषितम्॥ २५॥
रत्नपल्याणसंयुक्तं निबद्धश्वेतचामरैः।
घण्टिकाघर्घरीशब्दैः पूरयन्तं दिशो दश॥ २६॥
तत्रासीनं महादेवं शुद्धस्फटिकविग्रहम्।
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम्॥ २७॥
व्याघ्रचर्माम्बरधरं नागयज्ञोपवीतिनम्।
सर्वालंकारसंयुक्तं विद्युत्पिङ्गजटाधरम्॥ २८॥
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम्।
नानाविधायुधोद्भासिदशबाहुं त्रिलोचनम्॥ २९॥

---

पश्यति। यद्वा। पूर्वोक्तं तेज आदधत् अपिबत्। सादरमद्राक्षीदित्यर्थः। धेट् पाने "विभाषा धेट्श्व्योः" इति चङ्। पुनश्च यावत्प्रपश्यतीति॥ २३॥ तावदिति। तावद्वृषभं ददर्श। पीयूषस्यामृतस्य मथनेनोद्भूतं यन्नवनीतं तस्य पिण्डवत्स्थितम्। अतिशुद्धत्वसूचनार्थेदमुक्तम्॥ २४॥ प्रोतेति। प्रोतं शृङ्गाग्रे खचितं स्वर्णं सुवर्णं यस्य तं तथोक्तं मरकतस्य छाया कान्तिः तद्वत्कान्तिर्यस्य तादृशेन शृङ्गद्वयेनाञ्चितं रमणीयमित्यर्थः। नीलरत्नमिन्द्रनीलमणिस्तद्वदीक्षणे यस्य तं। ह्रस्वेन गलकम्बलेन सास्नया भूषितम्॥२५॥ रत्नेति। पल्याणं पृष्ठास्तरणं तेन संयुक्तम्। घण्टिकाः क्षुद्रघण्टाः घर्घर्यस्तदवान्तरभेदास्तासां शब्दैः दिशः पूरयन्तम्॥ २६॥ तत्रेति। तत्र तस्मिन्पूर्वोक्ते वृषभे समासीनं महादेवं ददर्श रघुनन्दन इति वक्ष्यमाणेनान्वयः॥ २७॥ २८॥ नीलकण्ठमिति। नानाविधान्यायुधानि तैरुद्भासितुं शीलं येषां ते तथोक्ताः तादृशा दशसंख्याका बाहवो यस्य तं तथोक्तम्। "सुप्यजातौ" इति सुब्ग्रहणं प्रादिषु प्रवृ-

युवानं पुरुषश्रेष्ठं सच्चिदानन्दविग्रहम् ॥ ३० ॥
तत्रैव च सुखासीनां पूर्णचन्द्रनिभाननाम् ।
नीलेन्दीवरदामाभामुद्यन्मरकतप्रभाम् ॥ ३१ ॥
मुक्ताभरणसंयुक्तां रात्रिं ताराचितामिव ।
विन्ध्यक्षितिधरोत्तुङ्गकुचभारभरालसाम् ॥ ३२ ॥
सदसत्संशयाविष्टमध्यदेशान्तरां वराम् ।
दिव्याभरणसंयुक्तां दिव्यगन्धानुलेपनाम् ॥ ३३ ॥
दिव्यमाल्याम्बरधरां नीलेन्दीवरलोचनाम् ।
अलकोद्भासिवदनां ताम्बूलग्रासशोभिताम् ॥ ३४ ॥
शिवालिङ्गनसंजातपुलकोद्भासिविग्रहाम् ।
सच्चिदानन्दरूपाढ्यां जगन्मातरमम्बिकाम् ॥ ३५ ॥

---

त्यर्थं तस्मात्प्राद्युपपदेऽपि णिनिरिति कैयटः ॥ २९ ॥ युवानमिति । पुरुषश्रेष्ठम् । "ईश्वरः सर्वभूतानाम्" इति श्रुतेः । वास्तवस्वरूपमाह सच्चिदानन्दविग्रहमिति ॥ ३० ॥ तत्रैवेति । पूर्ववद्वक्ष्यमाणेनान्वयः । नीलेन्दीवराणां यद्दाम माला तदाभां तत्सदृशीम् । अनेन पार्वत्याः कृष्णरूपत्वं सूचितम् । तदुक्तं मार्कण्डेये "कालिकेति समाख्याता हिमाचलकृताश्रया" इति । उद्यन्ती मरकतप्रमेव प्रभा यस्यास्ताम् ॥ ३१ ॥ मुक्तेति । मुक्ता एवाभरणानि तैः संयुक्तां ताराभिराचितां व्याप्तां रात्रिमिव स्थिताम् । विन्ध्यक्षितिधरवदुत्तुङ्गयोरुन्नतयोः कुचयोर्यो भारस्तस्य यो भरोऽतिशयस्तेनालसां मन्दगतिमित्यर्थः । "अथातिशयो भरः" इत्यमरः ॥ ३२ ॥ सदसदिति । अस्ति न वेत्येवं रूपे संदेह आविष्टं विषयभूतं मध्यदेशस्यान्तरमवकाशो यस्यास्तां वरां सर्वोत्तमाम् ॥ ३३ ॥ दिव्येति । दिव्यानां माल्यानामम्बराणां च धरां धारयन्तीम् । ताम्बूलस्य ग्रासेन भक्षणेन शोभिताम् । ग्रसु अदने घञ् । अलकैः कुन्तलैरुद्भासितुं शीलमस्य तत्तथा वदनं यस्यास्ताम् ॥ ३४ ॥ शिवेति । शिवस्यालिङ्गनेन संजातैः पुलकैरुद्भा-

सौन्दर्यसारसंदोहां ददर्श रघुनन्दनः ।
स्वस्ववाहनसंबद्धान्नानायुधलसत्करान् ॥ ३६ ॥
बृहद्रथन्तरादीनि सामानि परिगायतः ।
स्वस्वकान्तासमायुक्तान्दिक्पालान्परितः स्थितान् ॥३७॥
अग्रगं गरुडारूढं शङ्खचक्रगदाधरम् ।
कालाम्बुदप्रतीकाशं विद्युत्कान्तश्रिया युतम् ॥ ३८ ॥
जपन्तमेकमनसा रुद्राध्यायं जनार्दनम् ।
पश्चाच्चतुर्मुखं देवं ब्रह्माणं हंसवाहनम् ॥ ३९ ॥
चतुर्वक्त्रैश्चतुर्वेदरुद्रसूक्तैर्महेश्वरम् ।
स्तुवन्तं भारतीयुक्तं दीर्घकूर्चं जटाधरम् ॥ ४० ॥

---

सितुं शीलं यस्य स तथाभूतो विग्रहो देहो यस्यास्तां सच्चिदानन्दरूपाढ्यां तत्स्वरूपामित्यर्थः । सच्चिदानन्दस्वरूपलक्षणेन शिवशक्त्योरभेदः सूचितः । जगन्मातरं विवर्तोपादानभूतामित्यर्थः । अतएवाम्बिकां जगज्जननीम् ॥ ३५ ॥ सौन्दर्येति । सौन्दर्यसारस्य संदोहो मेलनं यस्यास्ताम् । बहुव्रीहेर्विशेष्यनिघ्नत्वात्स्त्रीत्वम् । षष्ठीतत्पुरुषे तु परवल्लिङ्गतया पुंस्त्वं स्यात् । स्वस्ववाहनैरैरावतादिभिः संबद्धान् संयुक्तान् । नानायुधैर्वज्रादिभिर्लसन्तः करा येषां तान् ॥ ३६ ॥ बृहदिति । बृहद्रथन्तरादिसामानि तद्भेदानित्यर्थः । स्वस्वकान्ताभिः स्त्रीभिः संयुक्तान्परितः समन्तात्स्थितान् ॥ ३७ ॥ अग्रगमिति । कालाम्बुजं नीलोत्पलम्, कालाम्बुद इति वा तत्सदृशम् । 'कालश्यामलमेचकाः" इत्यमरः । विद्युत्तडित्तद्वत्कान्ता स्फुरन्ती या श्रीः तया युतं युक्तम् । अनेन विशेषणेन कालाम्बुदसादृश्यमेवोचितमिति प्रतीयते ॥ ३८ ॥ जपन्तमिति । रुद्राध्यायं "नमस्ते रुद्रमन्यव" इति प्रसिद्धम् ॥ ३९ ॥ चतुर्वक्त्रैरिति । चतुर्भिर्वक्त्रैः चतुर्षु वेदेषु यानि रुद्रसूक्तानि तैः भारती सरस्वती तया युक्तं तथोक्तम्

अथर्वशिरसा देवं स्तुवन्तं मुनिमण्डलम् ।
गङ्गादितटिनीयुक्तमम्बुधिं नीलविग्रहम् ॥ ४१ ॥
श्वेताश्वतरमन्त्रेण स्तुवन्तं गिरिजापतिम् ।
अनन्तादिमहानागान्कैलासगिरिसंनिभान् ॥ ४२ ॥
कैवल्योपनिषत्पाठान्मणिरत्नविभूषितान् ।
सुवर्णवेत्रहस्ताढ्यं नन्दिनं पुरतः स्थितम् ॥ ४३ ॥
दक्षिणे मूषकारूढं गणेशं पर्वतोपमम् ।
मयूरवाहनारूढमुत्तरे षण्मुखं तथा ॥ ४४ ॥
महाकालं च चण्डेशं पार्श्वयोर्भीषणाकृतिम् ।
कालाग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसंनिभम् ॥ ४५ ॥
त्रिपादं कुटिलाकारं नटद्भृङ्गिरिटिं पुरः ।
नानाविकारवदनान्कोटिशः प्रमथाधिपान् ॥ ४६ ॥

---

दीर्घाः कूर्चाः श्मश्रूणि यस्य तम् । 'कूर्चो विकथने मध्ये भ्रुवोः श्मश्रुणि कैरवे" इति विश्वः । जटानां धरम् ॥ ४० ॥ अथर्वेति । अथर्वशिरसा उपनिषद्विशेषेणेत्यर्थः । देवं महादेवं मुनीनां मण्डलम् । मण्डलशब्दस्त्रिलिङ्ग्याम् । गङ्गादितटिन्यः नद्यः ताभिर्युक्तं अम्बुधिं समुद्रं नीलविग्रहं श्यामलदेहम् ॥ ४१ ॥ श्वेताश्वतरशाखिनां मन्त्रेण स्तुवन्तम् ॥ ४२ ॥ कैवल्येति । कैवल्योपनिषदं पठन्ति ते तथोक्तास्तान् । सुवर्णवेत्रसहितेन हस्तेनाढ्यम् ॥ ४३ ॥ दक्षिण इति । मूषक इति धातुवृत्तौ स्फुटम् । मूषिक इति प्रामादिकः । ददर्शेति सर्वत्र संबन्धो ज्ञेयः ॥ ४४ ॥ महाकालमिति । महाकालं चण्डेशं च द्वौ प्रथमविशेषौ कालाग्निरुद्रं अवतारम् । ज्वलन् यो दावाग्निर्वनाग्निस्तेन सदृशमिति नित्यसमासत्वादस्वपदविग्रह इति ज्ञेयम् ॥४५॥ त्रिपादमिति । नटंश्चासौ भृङ्गिरिटिश्च तं तथोक्तं,

नानावाहनसंयुक्तं परितो मातृमण्डलम् ।
पञ्चाक्षरीजपासक्तान्सिद्धविद्याधरादिकान् ॥ ४७ ॥
दिव्यरुद्रकगीतानि गायत्किन्नरवृन्दकम् ।
तत्र त्रैयम्बकं मन्त्रं जपद्द्विजकदम्बकम् ॥ ४८ ॥
गायन्तं वीणया गीतं नृत्यन्तं नारदं दिवि ।
नृत्यतो नाट्यनृत्येन रम्भादीनप्सरोगणान् ॥ ४९ ॥
गायच्चित्ररथादीनां गन्धर्वाणां कदम्बकम् ।
कम्बलाश्वतरौ शंभुकर्णकुण्डलतां गतौ ॥ ५० ॥
गायन्तौ पन्नगौ गीतं कपालं कम्बलं तथा ।
एवं देवसभां दृष्ट्वा कृतार्थो रघुनन्दनः ॥ ५१ ॥
हर्षगद्गदया वाचा स्तुवन्देवं महेश्वरम् ।
दिव्यनामसहस्रेण प्रणनाम पुनःपुनः ॥ ५२ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे शिवप्रादुर्भावो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

अयमपि प्रमथविशेषः ॥४६॥ नानेति । मातॄणां मण्डलम् । "ब्राह्मीत्याद्यास्तु मातरः" इत्यमरः ॥४७॥ दिव्येति । रुद्राः कायन्ते उच्चार्यन्त इति रुद्रकाणि दिव्यानि च तानि तथोक्तानि तान्येव गीतानि तद्गायतीति तद्गायत्किंनरवृन्दकम् द्विजानां ब्राह्मणानां कदम्बकम् ॥४८॥ गायन्तमिति । अङ्गविक्षेपमात्रं नृत्तं, पदार्थाभिनयो नृत्यं, वाक्याभिनयो नाट्यमिति भेदः ॥ ४९ ॥ गायदिति । शंभोः कर्णौ तत्र कुण्डलतां गतौ ॥ ५० ॥ गायन्ताविति । कपालं कम्बलं च एतन्नामानौ पन्नगौ ददर्श । एवमुक्तप्रकारेण ॥ ५१ ॥ ५२ ॥ इति श्रीशिवगीताबालानन्दिनीव्याख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ५

श्रीसूत उवाच।

अथ प्रादुरभूत्तत्र हिरण्मयरथो महान्।
अनेकदिव्यरत्नांशुकिर्मीरितदिगन्तरः ॥ १ ॥
नद्युपान्तिकपङ्काढ्यमहाचक्रचतुष्टयः।
मुक्तातोरणसंयुक्तः श्वेतच्छत्रशतावृतः ॥ २ ॥
शुद्धहेमखुरैराढ्यतुरंगगणसंयुतः।
मुक्तावितानविलसदूर्ध्वदिव्यवृषध्वजः ॥ ३ ॥
मत्तवारणिकायुक्तः पञ्चतत्त्वोपशोभितः।
पारिजाततरूद्भूतपुष्पमालाभिरञ्जितः ॥ ४ ॥
मृगनाभिसमुद्भूतकस्तूरीमदपङ्किलः।
कर्पूरागरुधूपोत्थगन्धाकृष्टमधुव्रतः ॥ ५ ॥
संवर्तघनघोषाढ्यो नानावाद्यसमन्वितः।
वीणावेणुस्वनासक्तकिन्नरीगणसंकुलः ॥ ६ ॥

---

सूत उवाच—अथेति। अथ सहस्रनामपाठानन्तरम्। हिरण्यप्रचुरो हिरण्मयः स चासौ रथश्च तथा। किर्मीरितं चित्रवर्णं कृतम् ॥ १ ॥ नदीति। नद्या गौतम्या उपान्तिकेन उपान्ते भवेन पङ्केन कर्दमेन आढ्यं लिप्तं महाचक्राणां चतुष्टयं यस्य स तथोक्तः मुक्तामयेन तोरणेन संयुक्तः ॥ २ ॥ शुद्धेति। शुद्धं यद्धेम तत्प्रचुराः खुराः तैराढ्या ये तुरंगगणास्तैः संयुक्तः। मुक्तावितानं मुक्ताफलनिर्मितं वितानमुल्लोचस्तेन विलसन्नूर्ध्वस्थः दिव्यो वृषो यस्य स तथा एवंभूतो ध्वजो यस्य स तथा ॥ ३ ॥ मत्तेति वारणिकाः करिण्यः पञ्चतत्त्वैस्तदधिष्ठातृदेवैरुपशोभितः अभिरञ्जितो भूषितः ॥ ४ ॥ मृगेति। पङ्किलः संजातपङ्कः। आकृष्टा बलादानीता मधुव्रता भ्रमरा यस्मिन्स तथा ॥५॥ संवर्तेति। संवर्ते प्रलये ये घनास्तेषां घोष इव घो-

एवं कृत्वा रथश्रेष्ठं वृषादुत्तीर्य शंकरः ।
अम्बया सहितस्तत्र पटतल्पेऽविशत्तदा ॥ ७ ॥
सुरनीरजनेत्रीणां श्वेतचामरचालनैः ।
दिव्यव्यजनवातैश्च प्रहृष्टो नीललोहितः ॥ ८ ॥
क्वणत्कङ्कणनिध्वानैर्मञ्जुमञ्जीरसिंजितैः ।
वीणावेणुस्वनैर्गीतैः पूर्णमासीज्जगत्रयम् ॥ ९ ॥
शुकवाक्यकलारावैः श्वेतपारावतस्वनैः ।
उन्निद्रभूषाफणिनां दर्शनादेव बर्हिणः ॥
ननृतुर्दर्शयन्तः स्वांश्चन्द्रकान्कोटिसंख्यया ॥ १० ॥
प्रणमन्तं यतो राममुत्थाप्य वृषभध्वजः ।
आनिनाय रथं दिव्यं प्रहृष्टेनान्तरात्मना ॥ ११ ॥

---

षस्तेनाढ्यः वीणादिस्वनासक्तेन किन्नरीगणेन संकुलः ॥६॥ एवमिति । पटतल्पे पटास्तरणे ॥७॥ सुरेति । सुराणां नीरजनेत्र्यः पद्मदृशस्तासां कण्ठे नीलः केशेषु लोहित इति नीललोहित इत्यर्थः ॥ ८ ॥ क्वणदिति । क्वणतां शब्दं कुर्वतां कङ्कणानां निध्वानैः शब्दैः । "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः । सिंजितं भूषणध्वनिः । "भूषणानां तु सिंजितम्" इति च कोशः ॥ ९ ॥ शुकवाक्येति । शुकानां कीराणां वाक्यरूपा ये कलारावाः अव्यक्तमधुरशब्दास्तैर्जगत्रयं पूर्णमासेति प्राक्तनेनान्वयः । उन्निद्राणां हृषादुल्लसतां भूषाफणिनां दर्शनादेव हेतोः बर्हिणो मयूराः कोटिसंख्ययोपलक्षितान्स्वानात्मीयान् चन्द्रकान् चन्द्र इव चन्द्रकास्तान् मेचकापरपर्यायान् "इवे प्रतिकृतौ" इति कन् । दर्शयन्तो ननृतुरित्यन्वयः ॥ १० ॥ प्रणमन्तमिति । रथचक्रोपरि मस्तकं निधाय प्रणमन्तं रामं वृषध्वजः शिव उपरिस्थत्वान्नतो नम्रः सन्नुत्थाप्य प्रहृष्टेनान्तरात्मना मनसा । इदं लीलाविग्रहत्वाद्युक्तम् । अन्यथा "अप्राणो ह्यमनाः शुभ्रः" इति श्रुतिवि-

कमण्डलुजलैः स्वच्छैः स्वयमाचम्य यत्नतः।
समाचाम्याथ पुरतः स्वाङ्के राममुपानयत् ॥ १२ ॥
अथ दिव्यं धनुस्तस्मै ददौ तूणीरमक्षयम्।
महापाशुपतं नाम दिव्यमस्त्रं ददौ ततः ॥ १३ ॥
उक्तश्च तेन रामोऽपि सादरं चन्द्रमौलिना।
जगन्नाशकरं रौद्रमुग्रमस्त्रमिदं नृप ॥ १४ ॥
अतो नेदं प्रयोक्तव्यं सामान्यसमरादिके।
अन्यो नास्ति प्रतीघात एतस्य भुवनत्रये ॥ १५ ॥
तस्मात्प्राणात्यये राम प्रयोक्तव्यमुपस्थिते।
अन्यदैतत्प्रयुक्तं चेज्जगत्संक्षयकृद्भवेत् ॥ १६ ॥
अथाहूय सुरश्रेष्ठान्लोकपालान्महेश्वरः।
उवाच परमप्रीतः स्वंस्वमस्त्रं प्रयच्छत ॥ १७ ॥
राघवोऽयं च तैरस्त्रै रावणं निहनिष्यति।
तस्मै देवैरवध्यत्वमिति दत्तो वरो मया ॥ १८ ॥

---

रोधः स्यात्। दिव्यं रथं आनिनाय प्रापयामासेत्यन्वयः ॥ ११ ॥ कमण्डल्विति। स्वयं कमण्डलुजलैराचम्य राममाचाम्याचमनं कारयित्वा स्वस्याङ्के उत्सङ्गे "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः। उपानयद्गृहीतवानित्यर्थः ॥ १२ ॥ अथेति। स्वाङ्क उपवेशानन्तरं तस्मै रामाय ॥ १३ ॥ उक्त इति। इदं सूतवाक्यं मुनीन्प्रति। किमुक्तस्तदेवाह—जगदिति। रौद्रं रुद्रदेवताकम् ॥ १४ ॥ अत इति। प्रतीघातः प्रतीकारः ॥ १५ ॥ तस्मादिति। प्राणात्यये उपस्थिते प्राप्ते सति एतत्प्रयोक्तव्यम्। विपक्षे बाधकमाह—अन्यदेति। पूर्वोक्तसंकटाभावकाले ॥ १६ ॥ अथेति। स्वास्त्रोपदेशानन्तरम्। यूयं स्वंस्वमस्त्रं रामायेति शेषः ॥ १७ ॥ एतेन युष्माकमेवेष्टं भविष्यती-

तस्माद्वानरतामेत्य भवन्तो युद्धदुर्मदाः।
साहाय्यमस्य कुर्वन्तु तेन सुस्था भविष्यथ॥ १९॥
तदाज्ञां शिरसा गृह्य सुराः प्राञ्जलयस्तदा।
प्रणम्य चरणौ शंभोः स्वंस्वमस्त्रं ददुर्मुदा॥ २०॥
नारायणास्त्रं दैत्यारिरैन्द्रमस्त्रं पुरंदरः।
ब्रह्मापि ब्रह्मदण्डास्त्रमाग्नेयास्त्रं धनंजयः॥ २१॥
याम्यं यमोऽपि मोहास्त्रं रक्षोराजस्तथा ददौ।
वरुणो वारुणं प्रादाद्वायव्यास्त्रं प्रभञ्जनः॥ २२॥
कौबेरं च कुबेरोऽपि रौद्रमीशान एव च।
सौरमस्त्रं ददौ सूरः सौम्यं सोमश्च पावकम्।
विश्वेदेवा ददुस्तस्मै वसवो वासवाभिधम्॥ २३॥
अथ तुष्टः प्रणम्येशं रामो दशरथात्मजः।
प्राञ्जलिः प्रणतो भूत्वा भक्तियुक्तो व्यजिज्ञपत्॥ २४॥

---

त्याह—राघव इति। वयमेव तं हनिष्याम इतिचेत्तत्राह। तस्मै रावणाय देवैरवध्यत्वमित्येवंरूपो वरो मया दत्तः। अतोऽयं राघव एव तस्य हन्तेति भावः॥ १८॥ तस्मादिति। यस्मात्पूर्वमेव मया चोदिताः संतो यूयं वानरतामेत्य तत्रतत्र तिष्ठन्ताम्। तस्मात्कारणाद्भवन्तः सर्वे युद्धदुर्मदा युद्धे सोत्कण्ठाः अस्य साहाय्यं कुर्वन्तु। फलमाह—तेनेति॥ १९॥ तदाज्ञामिति। गृह्य गृहीत्वेत्यर्थः। छान्दसोऽयं ल्यप्॥ २०॥ तान्येवास्त्राणि नामतो निर्दिशति—नारायणेति। धनंजयोऽग्निः॥ २१॥ याम्यमिति। रक्षोराजो नाम निर्ऋतिः। प्रभञ्जनो वायुः॥२२॥ कौबेरमिति। ईशानो लोकपालः। सूरः सूर्यः। पावकं विश्वेदेवा ददुः॥ २३॥ अथेति। व्यजिज्ञपद्वि-

श्रीराम उवाच ।

भगवन्मानुषैरेव नोलङ्घ्यो लवणाम्बुधिः ।
तत्र लङ्काभिधं दुर्गं दुर्जयं देवदानवैः ॥ २५ ॥
अनेककोटयस्तत्र राक्षसा बलवत्तराः ।
सर्वे स्वाध्यायनिरताः शिवभक्ता जितेन्द्रियाः ॥ २६ ॥
अनेकमायासंयुक्ता बुद्धिमन्तोऽग्निहोत्रिणः ।
कथमेकाकिना जेया मया भ्रात्रा च संयुगे ॥ २७ ॥

ईश्वर उवाच ।

रावणस्य वधे राम रक्षसामपि मारणे ।
विचारो न त्वया कार्यस्तस्य कालोऽयमागतः ॥ २८ ॥
अधर्मे तु प्रवृत्तास्ते देवब्राह्मणपीडने ।
तस्मादायुः क्षयं यातं तेषां श्रीरपि सुव्रत ॥ २९ ॥
राजस्त्रीलङ्घनासक्तं रावणं निहनिष्यसि ।
पानासक्तो रिपुर्जेतुं सुकरः समराङ्गणे ॥ ३० ॥

---

ज्ञापितवान् ॥ २४ ॥ भगवन्निति । एवकारः कात्स्न्र्ये । सर्वैरपि मनुष्यैरित्यर्थः । किंच तत्र दुर्गमस्ति । तदपि न साधारणमित्याह—दुर्जयमिति ॥ २५ ॥ रक्षका अपि दुर्जया इत्याह—अनेकेति । शिवभक्ता इत्यनेन शिवभक्तानां द्रोहो न कल्याणाय कल्पत इति ध्वनितम् । ननु एकशब्दस्य नित्यैकवचनान्ततया नञ्समासस्योत्तरप्राधान्यतया अनेकशब्दोऽपि नित्यैकवचनान्त एव । किंच कोटिशब्दस्यापि बहुवचनान्तत्वमनुपपन्नम् "विंशत्याद्याः सदैकत्वे" इत्यमरात् । तथाच अनेकाश्च ताः कोटयश्चेति कथं संभवतीति चेत्सत्यम् । अनेकशब्दानां बहूनामेकशेषे तदुपपत्तेः संख्याव्यक्तिबहुत्वे च बहुवचनोपपत्तेश्च ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ राजस्त्री सीता तस्या लङ्घनमवज्ञा तस्यामासक्तम् । पानासक्तो मद्यपः सु-

अधर्मनिरतः शत्रुर्भाग्येनैव हि लभ्यते।
अधीतवेदशास्त्रोऽपि सदा धर्मरतोऽपि वा।
विनाशकाले संप्राप्ते धर्ममार्गाच्च्युतो भवेत्॥ ३१॥
पीड्यन्ते देवताः सर्वाः सततं येन पापिना।
ब्राह्मणा ऋषयश्चैव तस्य नाशः स्वयं स्थितः॥ ३२॥
किष्किन्धानगरे राम देवानामंशसंभवाः।
वानरा बहवो जाता दुर्जया बलवत्तराः॥ ३३॥
साहाय्यं ते करिष्यन्ति तैर्बधान पयोनिधिम्।
अनेकशैलसंबद्धे सेतौ यान्तु बलीमुखाः।
रावणं सगणं हत्वा तामानय निजप्रियाम्॥ ३४॥
शस्त्रैर्युद्धे जयो यत्र तत्रास्त्राणि न योजयेत्।
निरस्त्रेष्वल्पशस्त्रेषु पलायनपरेषु च।
अस्त्राणि मुञ्चन्दिव्यानि स्वयमेव विनश्यति॥ ३५॥
अथवा किं बहूक्तेन मयैवोत्पादितं जगत्।
मयैव पाल्यते नित्यं मया संह्रियतेऽपि च॥ ३६॥

---

शक्यः॥ ३०॥ धर्मिष्ठः शत्रुरेव जेतुमशक्यः। अयं तु न तथेत्यन्यापदेशेनाह—अधर्मेति। अधर्म एव विनाशहेतुरित्याह—अधीतेति॥ ३१॥ पीड्यन्त इति। तस्य नाशः स्वयमेवोपस्थितः। त्वं निमित्तमात्रं भवेति भावः॥ ३२॥ सहायानाह—किष्किन्धेति॥ ३३॥ साहाय्यमिति। बधान समुद्रबन्धनं कुर्वित्यर्थः। बलीमुखाः कपयः। आनयेत्याशिषि लोट्॥ ३४॥ महाशस्त्रप्रयोगार्हानर्हशत्रुविचारमाह—शस्त्रैरिति॥ ३५॥ चिन्ता न कार्येति स-

अहमेको जगन्मृत्युर्मृत्योरपि महीपते।
ग्रसेऽहमेव सकलं जगदेतच्चराचरम् ॥ ३७ ॥
मम वक्त्रगताः सर्वे राक्षसा युद्धदुर्मदाः।
निमित्तमात्रस्त्वं भूयाः कीर्तिमाप्स्यसि संगरे ॥ ३८ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे रामाय वरप्रदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ६

### श्रीराम उवाच।

भगवन्नत्र मे चित्रं महदेतत्प्रजायते।
शुद्धस्फटिकसंकाशस्त्रिनेत्रश्चन्द्रशेखरः ॥ १ ॥
मूर्तस्त्वं तु परिच्छिन्नाकृतिः पुरुषरूपधृक्।
अम्बया सहितोऽत्रैव रमसे प्रमथैः सह ॥ २ ॥
त्वं कथं पञ्चभूतादि जगदेतच्चराचरम्।
तद्ब्रूहि गिरिजाकान्त यदि तेऽनुग्रहो मयि ॥ ३ ॥

---

माश्वासयन्नुपसंहरति—अथवेति त्रिभिः ॥ ३६ ॥ ३७ ॥ ३८ ॥

इति श्रीशिवगीताबालानन्दिनीव्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

पूर्वाध्यायान्ते जगज्जन्मादिकर्तृत्वं प्रतिपादितं तन्मूर्तस्य कथमुपपद्यत इति शङ्कां कुर्वन् श्रीराम उवाच—भगवन्निति। हे भगवन्, अत्र सृष्ट्यादिकर्ताहमेवेत्येवंरूपे त्वदुक्तेऽर्थे मे मम महच्चित्रं महाश्चर्यं प्रजायते। आश्चर्ये बीजमाह—शुद्धेत्यादिना ॥ १ ॥ मूर्त इति। मूर्तः परिच्छिन्नः। अतएव परिच्छिन्नाकृतिः। पुरुषरूपेण धृष्णोतीति तथोक्तः। 'ऋत्विक्' इति सूत्रे निपातनात्कुत्वम् ॥२॥ त्वं कथमिति। एवंभूतस्त्वं पञ्चभूतान्यादिर्यस्य तथाभूतमेतच्चराचरं करोषि

श्रीभगवानुवाच ।

शृणु राम महाभाग दुर्ज्ञेयममरैरपि ।
तत्प्रवक्ष्यामि यत्नेन ब्रह्मचर्येण सुव्रत ।
पारं यास्यस्यनायासाद्येन संसारनीरधेः ॥ ४ ॥
दृश्यन्ते पञ्चभूतानि ये च लोकाश्चतुर्दश ।
समुद्राः पर्वता देवा राक्षसा ऋषयस्तथा ॥ ५ ॥
दृश्यन्ते यानि चान्यानि स्थावराणि चराणि च ।
गन्धर्वाः प्रमथा नागाः सर्वे ते मद्विभूतयः ॥ ६ ॥
पुरा ब्रह्मादयो देवा द्रष्टुकामा ममाकृतिम् ।
मन्दरं प्रययुः सर्वे मम प्रियतरं गिरिम् ॥ ७ ॥

---

पालयसि हंसि चेति शेषः । सर्वात्मकत्वं जगदेतदिति तु नाक्षिप्यते । तस्य पूर्वाध्यायान्तेऽनुपक्रान्तत्वात् । तथाच शङ्कितुरयमाशयः । परिच्छिन्नदेहस्य कुलालादेर्विप्रकृष्टकार्यजनकत्वानुपपत्तिरित्यादि ॥ ३ ॥ शृण्विति । हे राम, यत्नेन ब्रह्मचर्येण शृणु । यदमरैरपि दुर्ज्ञेयं तत्प्रवक्ष्यामि तुभ्यमिति शेषः । येन ज्ञानेन ॥ ४ ॥ यथा जीवस्याहंकारवृत्तिसापेक्षं कर्तृत्वं तथा न मम कर्तृत्वं किंतु मायावृत्तिसापेक्षस्य लीलाविग्रहस्य परिच्छिन्नत्वेऽपि कर्तृत्वांशानुपयोगान्न कश्चिद्दोषः । मम मायायाश्च सर्वाङ्गत्वात्समस्तजगदुपादानत्वमस्तीत्यतो मयि शङ्कां मा कार्षीरित्याशयेनाह—दृश्यन्त इति द्वाभ्याम् । पञ्चभूतादि सर्वं माया तत्कार्यं च मयि विवर्तमात्रं सुवर्णेऽलंकारभेदवन्मायाया इदं सर्वं परिणामः । दुग्धस्य दधीव ॥ ५ ॥ ६ ॥ इममेवार्थं पूर्वकथोपन्यासेन द्रढयति—पुरेति । आकृतिं

स्तुत्वा प्राञ्जलयो देवा मां तथा पुरतः स्थिताः ।
तान्दृष्ट्वाथ मया देवाँल्लीलाकुलितचेतसः ॥
तेषामपहृतं ज्ञानं ब्रह्मादीनां दिवौकसाम् ॥ ८ ॥
आसंस्तेऽसकृदज्ञाना मामाहुः को भवानिति ।
अथाब्रुवमहं देवानहमेव पुरातनः ॥ ९ ॥
आसं प्रथममेवाहं वर्तामि च सुरेश्वराः ।
भविष्यामि च लोकेऽस्मिन्मत्तो नान्योऽस्ति कश्चन॥१०॥
व्यतिरिक्तं च मत्तोऽस्ति नान्यत्किंचित्सुरेश्वराः ।
नित्योऽनित्योऽहमनघो ब्रह्मणां ब्रह्मणस्पतिः ॥ ११ ॥

---

लीलाविग्रहम् ॥ ७ ॥ स्तुत्वेति । मां स्तुत्वा प्राञ्जलयः सन्तस्तथैव पुरतः स्थिताः तान्मदीयलीलया आकुलितं चेतो येषां तथाभूतान्दृष्ट्वा मया तेषां ज्ञानमपहृतम् । प्रश्नावतरणपूर्वकं परमतत्त्वोपदेशार्थमिति भावः ॥ ८ ॥ आसन्निति । अज्ञाना ज्ञानशून्या आसन् । भवान्क इति मामाहुः । असकृद्वारंवारम् । 'अथ तेऽपहृतज्ञाना' इत्यपि पाठान्तरम् । अथ तेषां प्रश्नानन्तरं देवानहमब्रुवम् । अहमेव पुरातन इति ॥ ९ ॥ ननु "जीव ईशो विशुद्धा चित्तस्यां भेदस्तयोर्द्वयोः । अविद्याचित्तयोर्योगः षडस्माकमनादयः ॥" इति सिद्धान्ते उक्तं तत्र कथमहमेव पुरातन इत्युक्तमितिचेत्तत्राह—आसमिति । मत्तोऽन्योऽविद्यातत्संबन्धादिः कोऽपि परमार्थिको नास्तीत्यर्थः । तथाच श्रुतिः । "ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यादि । तथाच कल्पितभावाभावयोरधिष्ठानमात्रस्वरूपत्वं रज्जुसर्पादौ प्रसिद्धमिति भावः ॥ १० ॥ व्यतिरिक्तमिति । पूर्वमुक्तोऽप्यर्थः पुनरभ्यस्यते । अभ्यासो हि तात्पर्यलिङ्गम् । तदुक्तम्—"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति । नित्य इति स्वरूपेण ।

दक्षिणाञ्च उदञ्चोऽहं प्राञ्चः प्रत्यञ्च एव च।
अधश्चोर्ध्वं च विदिशो दिशश्चाहं सुरेश्वराः॥ १२॥
सावित्री चापि गायत्री स्त्री पुमानपुमानपि।
त्रिष्टुप् जगत्यनुष्टुप् च पङ्क्तिश्छन्दस्त्रयीमयः॥ १३॥
सत्योऽहं सर्वतः शान्तस्त्रेताग्निर्गौरवं गुरुः।
गौरवं गह्वरं चाहं द्यौरहं जगतां प्रभुः॥ १४॥
ज्येष्ठः सर्वसुरश्रेष्ठो वर्षिष्ठोऽहमपांपतिः।
आर्योऽहं भगवानीशस्तेजोऽहं चादिरप्यहम्॥ १५॥

---

अनित्यः घटादितादात्म्यात्। ब्रह्मणां वेदानां ब्रह्मणश्चतुर्मुखस्य। अविद्यारहितत्वादनघः॥ ११॥ दक्षिणेति। दक्षिणस्यामञ्चतीति दक्षिणाञ्चः। उदुत्तरस्यामञ्चतीति तथा। प्रपूर्वस्यां प्राग्वत्। अधश्चोर्ध्वं चाञ्चतीति शेषः। दिशो विदिशश्चेति सर्वत्र परिपूर्ण इत्यर्थः॥ १२॥ स्वस्य सर्वतादात्म्यापन्नत्वात्सर्वस्वरूपत्वमाह—सावित्रीति। एकस्या एव गायत्र्याः कालभेदान्नामभेदः। "गायत्री नाम पूर्वाह्णे सावित्री प्रथमे दिने" इति। इदं सरस्वत्या अप्युपलक्षणम्। स्त्र्यादिव्यक्तित्रयमहमेव। अपुमान्नपुंसकमित्यर्थः। त्रिष्टुबित्यादिविशेषरूपोऽहम्। त्रयीमय ऋगादिवेदत्रयप्रचुरः तत्प्रतिपाद्यस्वरूपोऽहम्॥ १३॥ सत्य इति। मिथ्याभूतानामविद्यातत्कार्याणामधिष्ठाने मयि त्रैकालिकनिषेधप्रतियोगित्वादहमेव परमार्थसत्य इत्युक्तं स्मारयति। अतएव सर्वतः सर्वेभ्यः प्रातिभासिकव्यावहारिकसत्येभ्य इत्यर्थः। सार्वविभक्तिकस्तसिः। शान्तः आविद्यकधर्मैरक्षुब्धः। त्रेताग्निराहवनीयादिः। गौरवं गुरोः कर्माध्ययनादि। गुरुश्चाहम्। गौर्वाक् गह्वरं रहस्यं द्यौः स्वर्गः प्रभुर्नियन्ता॥ १४॥ ज्येष्ठ इति। ज्येष्ठः सर्वेषामादिभूतत्वात्। वर्षिष्ठः ज्ञानेन बद्धतरत्वात्। अपांपतिः समुद्रः। आर्यः पूज्यतमत्वात्।

ऋग्वेदोऽहं यजुर्वेदः सामवेदोऽहमात्मभूः ।
अथर्वणश्च मन्त्रोऽहं तथा चाङ्गिरसो वरः ॥ १६ ॥
इतिहासपुराणानि कल्पोऽहं कल्पवानहम् ।
नाराशंसी च गाथाहं विद्योपनिषदोऽस्म्यहम् ॥ १७ ॥
श्लोकाः सूत्राणि चैवाहमनुव्याख्यानमेव च ।
व्याख्यानानि तथा विद्या इष्टं हुतमथाहुतिः ॥ १८ ॥
दत्तादत्तमयं लोकः परलोकोऽहमक्षरः ।
क्षरः सर्वाणि भूतानि दान्तिः शान्तिरहं खगः ॥ १९ ॥
गुह्योऽहं सर्ववेदेषु आरण्योऽहमजोऽप्यहम् ।
पुष्करं च पवित्रं च मध्यं चाहमतःपरम् ।
बहिश्चाहं तथा चान्तः पुरस्तादहमव्ययः ॥ २० ॥

---

भगवान् षड्गुणत्वात् । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥" इङ्गना संज्ञा । तेजोऽहम् । आदिस्तेजसः वायुरित्यर्थः ॥ १५ ॥ ऋग्वेद इति । अथर्वणोऽङ्गिरसश्च मन्त्रो यः स चतुर्थो वेदः सचाहमित्यर्थः ॥ १६ ॥ इतिहासो भारतादिः । पुराणानि ब्रह्मादीनि । कल्पः प्रयोगः । कल्पवान् तत्कर्ता बौधायनादिः । नाराशंसी नाम रुद्रप्रतिपादकमन्त्रविशेषः । गाथा यज्ञप्रशंसादिः । विद्या उपासना "येऽन्नं ब्रह्मोपासते" इत्यादिः । उपनिषदः ब्रह्मप्रतिपादिका विद्याः ॥ १७ ॥ श्लोकाः "तदप्येष श्लोको भवति" इत्यादिलक्षणाः । सूत्राणि ऋषिकृतानि । अनुव्याख्यानानि शास्त्रेषु । विद्या गान्धर्वविद्याः । इष्टं यागः । हुतं होमः । आहुतिर्द्रव्यम् ॥ १८ ॥ दत्त इति । दत्तो दानकर्मीभूतो गवादिः । दत्तं दानम् । लोकः इहलोकः । परलोकः पुण्यादीनां फलीभूतः स्वर्गादिः ॥ १९ ॥ बहिरिति । बहिश्चाहमित्यादि दक्षिणाञ्च इत्यादिनोक्तमप्यभ्यासार्थं पुनरुक्तम् । एतदेवास्मि-

ज्योतिश्चाहं तमश्चाहं तन्मात्राणीन्द्रियाण्यहम् ।
बुद्धिश्चाहमहंकारो विषयाण्यहमेव हि ॥ २१ ॥
ब्रह्मा विष्णुर्महेशोऽहमुमा स्कन्दो विनायकः ।
इन्द्रोऽग्निश्च यमश्चाहं निर्ऋतिर्वरुणोऽनिलः ॥ २२ ॥
कुबेरोऽहं तथेशानो भूर्भुवःस्वर्महर्जनः ।
तपः सत्यं च पृथिवी चापस्तेजोऽनिलोऽप्यहम् ॥२३॥
आकाशोऽहं रविः सोमो नक्षत्राणि गृहाण्यहम् ।
प्राणः कालस्तथा मृत्युरमृतं भूतमप्यहम् ॥ २४ ॥
भव्यं भविष्यत्कृत्स्नं च विश्वं सर्वात्मकोऽप्यहम् ।
ओमादौ च तथा मध्ये भूर्भुवः स्वस्तथैव च ।
ततोऽहं विश्वरूपोऽस्मि शीर्षं च जपतां सदा ॥ २५ ॥
अशितं पायितं चाहं कृतं चाकृतमप्यहम् ।
परं चैवापरं चाहमहं सूर्यः परायणः ॥ २६ ॥
अहं जगद्धितं दिव्यमक्षरं सूक्ष्ममप्यहम् ।
प्राजापत्यं पवित्रं च सौम्यमग्राह्यमग्रियम् ॥ २७ ॥

---

न्प्रकरणे सर्वेषु पौनरुक्त्येषु समाधानं ज्ञेयम् ॥ २० ॥ ज्योतिरिति । तन्मात्राणि अहंभूतानि विषयाणि विषया इत्यर्थः । क्लीबत्वमार्षम् ॥ २१ ॥ २२ ॥ २३ ॥ आकाश इति । ग्रहाणीत्यार्षम् । भूतमतीतम् ॥ २४ ॥ भव्यमिति । सर्वात्मक अन्तर्यामीति । आदौॐकारः मध्येभूर्भुवःस्वः । ततो गायत्री । ततः शीर्षम् "ॐआपोज्योतिः" इत्यादि । जपतां द्विजानां इदं सर्वमहमेव व्यस्तं समस्तं च । विश्वरूपो विराण्मूर्तिः ॥ २५ ॥ अशितमिति । परायणः सर्वेषामाश्रयः ॥ २६ ॥ अहमिति । प्राजापत्यं प्रजापतिदेवतात्मकम् । अग्रियं अ-

अहमेवोपसंहर्ता महाग्रासौजसां निधिः ।
हृदये देवतात्वेन प्राणत्वेन प्रतिष्ठितः ॥ २८ ॥
शिरश्चोत्तरतो यस्य पादौ दक्षिणतस्तथा ।
यस्य सर्वोऽन्तरः साक्षादोंकारोऽहं त्रिमात्रकः ॥ २९ ॥
ऊर्ध्वमुन्नामये यस्मादधश्चापनयाम्यथ ।
तस्मादोंकार एवाहमेको नित्यः सनातनः ॥ ३० ॥
ऋचो यजूंषि सामानि यो ब्रह्मा यज्ञकर्मणि ।
प्रणामये ब्राह्मणेभ्यस्तेनाहं प्रणवो मतः ॥ ३१ ॥
स्नेहो यथा मांसखण्डं व्याप्नोति व्यापयत्यपि ।
सर्वलोकानहं तद्वत्सर्वव्यापी ततोऽस्म्यहम् ॥ ३२ ॥

---

ग्रेभवम् ॥ २७ ॥ अहमेवेति । महान्तो नगसागराद्याः ग्रासा भक्ष्याणि येषां तेषां तेजसां प्रलयाग्न्यादीनां निधिरधिष्ठानम् । प्राणिनां हृदये देवतात्वप्राणत्वाभ्यां प्रतिष्ठितश्चाहमेव ॥ २८ ॥ शिर इति । यस्याद्रूपस्य स्पर्शा उत्तरत उत्तरस्यां दिशि शिरः । ऊष्माणो दक्षिणतः दक्षिणस्यां दिशि पादौ । अन्तस्थसंज्ञः सर्वोऽपि यस्यान्तरो मध्यभागः । स साक्षादोंकारोऽहं । कयापि विवक्षया भागकल्पना कृतेति ज्ञेयम् ॥ २९ ॥ ऊर्ध्वमिति । यस्मात्प्राणिनो जापकानूर्ध्वं स्वर्गादिकं प्रति उन्नामयेऽपनयामि अथ पुण्ये क्षीणे सति अधः नयामि च । तस्मादोंकारः ॥ ३० ॥ प्रकारान्तरेण निर्वक्ति—ऋच इति । योऽहं ब्रह्माख्यऋत्विग्विशेषः सन् ऋगादीनि तत्तदृत्विजः प्रति प्रणामये उपयामि तेन कारणेनाहं प्रणवो मतः ॥ ३१ ॥ स्नेह इति । स्नेहो घृतादिद्रव्यं मांसखण्डं कर्म व्याप्नोति । तस्मिन्मांसखण्डे भुक्ते स स्थूलदेहं व्यापयति च तद्वदहमप्यधिष्ठानत्वेनानुस्यूतः सन् यतः सर्वं व्याप्नोमि सर्वलोकं व्यापयामि च । ततो-

ब्रह्मा हरिश्च भगवानाद्यन्तं नोपलब्धवान्।
ततोऽन्ये च सुरा यस्मादनन्तोऽहमितीरितः॥ ३३॥
गर्भजन्मजरामृत्युसंसारभयसागरात्।
तारयामि यतो भक्तं तस्मात्तारोऽहमीरितः॥ ३४॥
चतुर्विधेषु देहेषु जीवत्वेन वसाम्यहम्।
सूक्ष्मो भूत्वाथ हृद्देशे यत्तत्सूक्ष्मः प्रकीर्तितः॥ ३५॥
महातमसि मग्नेभ्यो भक्तेभ्यो यत्प्रकाशये।
विद्युद्वदतुलं रूपं तस्माद्वैद्युतमस्म्यहम्॥ ३६॥
एक एव यतो लोकान्विसृजामि सृजामि च।
विवासयामि गृह्णामि तस्मादेकोऽहमीश्वरः॥ ३७॥
न द्वितीयो यतस्तस्थे तुरीयं ब्रह्म यत्स्वयम्।
भूतान्यात्मनि संहृत्य चैको रुद्रो वसाम्यहम्॥ ३८॥

---

हेतोः सर्वव्याप्यस्मि॥ ३२॥ ब्रह्मेति। आदिश्चान्तश्च तयोः समाहार आद्यन्तम्॥ ३३॥ ३४॥ चतुर्विधेष्विति। जरायुजाण्डजस्वेदजोद्भिज्जेषु देहेषु जीवत्वेन वसामि हृद्देशे। सूक्ष्मो भूत्वेति स्वभावतः सूक्ष्मत्वाभावेऽप्यन्तःकरणौपाधिकं सूक्ष्मत्वमस्तीत्यर्थः। एवेन "एषोऽणुरात्मा" इत्यादिश्रुतयोऽपि औपाधिकाणुपरा एव। एतेन स्वाभाविकमणुत्वं जीवस्येति वदन्तो माध्वाः परास्ताः॥३५॥ महातमसीति। महातमसि अविद्यायां यद्यस्मात्कारणात् विद्युद्वत्तडिद्वत् एतत्सदृशमित्यर्थः। अतुलमसदृशं रूपं प्रकाशये तस्माद्वैद्युतमितिशब्दवाच्योऽस्मि॥ ३६॥ एक इति। सृजामि विसृजामि संहरामि विवासयामि लोकाल्लोकान्तरं प्रापयामि गृह्णामि अनुगृह्णामि। यस्माज्जगत्सृष्ट्यादिषु ममैकस्यैव स्वातन्त्र्यमस्ति तस्मादेकशब्दभागस्मि॥ ३७॥ न द्वितीय इति। यतो यस्माद्ब्रह्मणो द्वितीयो न तस्थे। किंतु आत्मनि भूतानि संहृत्य एकएव वसामि

सर्वलोकान्यदीशेऽहमीशिनीभिश्च शक्तिभिः ।
ईशानमस्य जगतः स्वर्दृशं चक्षुरीश्वरम् ॥ ३९ ॥
ईशानमिन्द्र तस्थुषः सर्वेषामपि सर्वदा ।
ईशानः सर्वविद्यानां यदीशानस्तदस्म्यहम् ॥ ४० ॥
सर्वान्भावान्निरीक्षेऽहमात्मज्ञानं निरीक्षये ।
योगं च समये यस्माद्भगवान्महतो मतः ॥ ४१ ॥

---

"आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिश्रुतेः । आत्मानं विशिनष्टि—तुरीयमिति । गुणत्रयोपाधिकेभ्यो ब्रह्मादिभ्यो विलक्षणं तुरीयं ब्रह्म चतुर्थं निर्गुणमित्यर्थः । आत्मनो निजं रूपं तस्थ इत्यत्र "छन्दसि लुङ्लङ्लिटः" इति कालविशेषनिरपेक्षो लिट् ॥ ३८ ॥ सर्वलोकानिति । यद्यस्मात्कारणात् ईशयन्त्यभीक्ष्णं नियमयन्तीत्यर्थः । इतीशिन्यः । णिजन्तादाभीक्ष्ण्ये णिनिः । तादृशीभिः शक्तिभिः मायाशक्तिभिरित्यर्थः । सर्वान् लोकानीशे नियमये । तत्तस्मात्कारणादीशानोऽस्मीत्यन्वयः । अत्रार्थे श्रुतिमर्थतः पठति—ईशानमस्येति । जगतः जंगमस्य तस्थुषः स्थावरस्य च ईशानं स्वर्दृशम् । स्वःशब्दः सकललोकलक्षकः । स्वःपश्यतीति स्वर्दृक् तं स्वर्दृशम् । सर्वलोकद्रष्टारमित्यर्थः । चष्टे इति चक्षुः अभिव्यञ्जकम् । सत्ताप्रदमित्यर्थः । श्रुतिरपि "अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः" इति । हे शूर हे इन्द्र, इन्दतीतीन्द्र, परमैश्वर्यत्वात्त्वां अभिनोनुमः अतिशयेन स्तुमः । कथंभूता वयम् । अदुग्धा धेनव इव त्वदभिषेकार्थं क्षीरपात्रशालिन इत्यर्थः । उत्तरार्धं व्याख्यातम् ॥ ३९ ॥ एवमृचमर्थतः पठित्वा यजुरर्थतः पठति—ईशान इति । "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इत्यादियाजुषेऽपि । यद्यस्मात्कारणाच्छ्रुतिद्वयमीशानं प्रतिपादयति तस्मादीशानोऽहमिति भावः ॥ ४० ॥ सर्वानिति । य-

अजस्रं यच्च गृह्णामि विसृजामि सृजामि च।
सर्वाँल्लोकान्वासयामि तेनाहं वै महेश्वरः॥ ४२॥
महत्स्वात्मज्ञानयोगैरैश्वर्यैस्तु महीयते।
सर्वान्भावान्महादेवः सृजत्यवति सोऽस्म्यहम्॥ ४३॥
एषोऽस्मि देवः प्रदिशोऽपि सर्वाः
पूर्वो हि जातोऽस्म्यहमेव गर्भे।
अहं हि जातश्च जनिष्यमाणः
प्रत्यग्जनास्तिष्ठति सर्वतोमुखः॥ ४४॥

स्मात्कारणात् सर्वानतीतानागतभूतान् भावान् पदार्थान्निरीक्षे पश्यामि तथा महतः महापुरुषान्। साधनसंपन्नानिति यावत्। आत्मज्ञानं आत्मसाक्षात्कारसाधनं। योगम् ज्ञानयोगमित्यर्थः। निरीक्षये बोधयामि। तथा सम्यक् अये गच्छामि। सर्वं व्याप्नोमीत्यर्थः। अतः कारणादहं भगवान्मतः। "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः। तथाच माहात्म्यवाची भगशब्दस्तद्वानहम्। माहात्म्यं तूक्तमेव॥ ४१॥ अजस्रमिति। एकएव यतो लोकानित्यस्मिन् श्लोके उक्त एवार्थोऽत्राभ्यासार्थं पुनरुक्त इत्यपौनरुक्त्यम्॥ ४२॥ महत्स्विति। महान्तो ब्रह्मादयस्तेषु मध्ये सोऽहं महादेव इति संबन्धः। स क इत्याकाङ्क्षायां य इत्यध्याहृत्य यो देव आत्मज्ञानं च योगाश्च तैर्महीयते पूजां प्राप्नोति ऐश्वर्यैश्च महीयते। यः सर्वान् भावान् सृजति अवति स महादेवोऽहमेव नान्य इति भावः॥ ४३॥ महत्त्वमेव द्रढयति—एषोऽस्मीति। "एषो हि देवः प्रदिशो नु सर्वाः" इति श्रुतिमर्थतः पठति। अहमेव श्रुत्युक्तो देवस्तिष्ठति स देवोऽस्मि। सर्वाः प्रदिशोऽपि अस्मि सर्वत्रास्मीत्यर्थः। "अकर्मकधातुभिर्योगे देशः कालो गन्तव्योऽध्वा च कर्मसंज्ञकः" इति कर्मत्वम्। पूर्वो जातः अतीत इत्यर्थः। तथा गर्भे जातोऽह-

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति संपतत्रै-
र्द्यावाभूमी जनयन्देव एकः ॥ ४५ ॥
वालाग्रमात्रं हृदयस्य मध्ये
विश्वेदेवं जातवेदं वरेण्यम् ।
मामात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ४६ ॥

---

मेव । तथा जातः गर्भाद्बहिर्निर्गतश्च जनिष्यमाण उत्पत्स्यमानश्चाहमेव । किंच सर्वे जना अयमेव । अतएव सर्वतोमुखः । इति सोपाधिकं स्वरूपमुक्त्वा निरुपाधिकमाह—प्रत्यगिति । अविद्यातत्कार्येभ्यः प्रातिकूल्येन सत्यज्ञानानन्दतयाञ्चति प्रकाशत इति प्रत्यक् । विवर्ताधिष्ठानमात्रामित्यर्थः ॥ ४४ ॥ अस्मिन्नर्थे दार्ढ्याय श्रुत्यन्तरमर्थतः पठति—विश्वत इति । विश्वतादात्म्यापन्नत्वात्सर्वचक्षुः सर्वमुखः सर्वबाहुः सर्वपाद इत्युच्यते । बाहुभ्यां तथा पतत्रैर्गमनशीलैः पादैरित्यर्थः । अत्र पाणिपादस्थानापन्नैर्ज्ञानाज्ञानधर्माधर्मादिभिरित्यर्थः । दिवं च पृथिवीं च धमति प्रेरयति । किं कुर्वन् । द्यावाभूमी जनयन्सृजन् । तथापि देव एक एव सृष्टेर्मायिकत्वादिति भावः ॥ ४५ ॥ वालाग्रेति । धियं बुद्धिमीरयन्तीति धीराः कुशला ये पुरुषाः मां आत्मस्थं बुद्धिस्थं अनुपश्यन्ति श्रवणादिसाधनमनुसृत्य पश्यन्ति साक्षात्कुर्वन्तीत्यर्थः । तेषां जीवेशाभेदसाक्षात्कारवतां शाश्वती शान्तिर्मोक्षसुखमाविर्भवति इतरेषां भेददर्शिनां न । कीदृशं जीवम् । वालाग्रमात्रं केशाग्रप्रमाणं स्वरूपेण व्यापकत्वेऽपि औपा-

अहं योनिमधितिष्ठामि चैको
मयेदं पूर्णं पञ्चविधं च सर्वम्।
मामीशानं पुरुषं देवमित्थं
विचार्यमाणं शान्तिमत्यन्तमेति ॥ ४७ ॥
प्राणेष्वन्तर्मनसो लिङ्गमाहु-
र्यस्मिन्नशनाया च तृष्णा क्षमा च।
तृष्णां छित्त्वा हेतुजालस्य मूलं
बुद्ध्या चित्तं स्थापयित्वा मयीह।
एवं मां ये ध्यायमाना भजन्ते
तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ४८ ॥

---

धिकपरिच्छेदवन्तमित्यर्थः। कीदृशं मां विश्वेदेवं विश्वाधिष्ठानत्वाद्विश्वात्मकम्। एदन्तत्वमार्षम्। जातो वेदो धनं यस्मात्तं जातवेदम्। "अग्नेः प्रजातं परि यद्धिरण्यम्" इति श्रुतेः। वरेण्यं वरणीयम्। एवमौपाधिकभेदवतोरपि जीवेशयोस्तत्त्वंपदार्थशोधनपूर्वकमभेदेन भागत्यागलक्षणया मां परमार्थभूतं भजतां मोक्षो भवति नेतरेषामिति निर्गलितोऽर्थः ॥ ४६ ॥ तस्य विवर्ताधिष्ठानत्वं निगमयति—अहमिति। योनिं अधिष्ठानत्वेन संभाव्यमानं शुक्त्यादिकमहमेवाधितिष्ठामि। शुक्त्याद्युपहितोऽहमेव रजताद्यधिष्ठानमित्यर्थः। मायाधिष्ठानभूतेनेह पञ्चविधं पञ्चभूतात्मकं सर्वं पूर्णम्। धृतमित्यर्थः। इत्थमुक्तरीत्या विचार्यमाणं मामेति प्राप्नोति। ब्रह्मैव भवतीत्यर्थः। कीदृशं माम्। अत्यन्तं शान्तिं। प्रपञ्चोपशममित्यर्थः ॥४७॥ प्राणेष्विति। यस्मिन्मनसि अशनाया अशनविषयिणीच्छास्ति। "अशनायोदन्य–" इति निपातनादशनाया रूपसिद्धिः। तथा य-

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ॥ ४९ ॥
श्रुत्वेति देवा मद्वाक्यं कैवल्यज्ञानमुत्तमम् ।
जपन्तो मम नामानि मम ध्यानपरायणाः ॥ ५० ॥
सर्वे ते स्वस्वदेहान्ते मत्सायुज्यं गताः पुरा ।
ततो ये परिदृश्यन्ते पदार्था मद्विभूतयः ॥ ५१ ॥

---

स्मिन् मनसि तृष्णा अक्षमा चास्ति तादृशस्य मनसो लिङ्गम् । प्राणेषु वायुषु बहिरिन्द्रियेषु च वृत्तिरूपमाहुः । अन्तःकरणपरिणामरूपाः कामादयोऽन्यत्राप्यध्यस्यन्त इत्यर्थः । तस्मान्मनोनिग्रह एव कार्य इत्याह—तृष्णां छित्त्वेति । कीदृशीं तृष्णां । हेतुजालस्य मूलम् शुभाशुभफलहेतूनां धर्माधर्मादीनां संघस्य मूलम् । अतएव "कामः संकल्पो विचिकित्सा" इति श्रुतौ काम एवादौ पठितः । तृष्णाजयानन्तरं कर्तव्यामाह—बुद्ध्येति । इह मयि चित्तं बुद्ध्या व्यवसायात्मिकया स्थापयित्वा । एवं पूर्वोक्तरीत्या ध्यायमाना ध्यायन्तः । चानश् नतु शानच् । ध्यै धातोः परस्मैपदित्वात् । एवं ये मां भजन्ते तेषामेव शान्तिर्मोक्ष इति भावः ॥ ४८ ॥ यतो वाच इति । यतो यस्माद्ब्रह्मणः । नन्वेवं सति औपनिषदत्वं भज्येतेत्याशङ्क्याह—अप्राप्येति । अभिधावृत्तिमप्राप्येत्यर्थः । तथाच तत्त्वंपदयोर्जडांशपरित्यागेन लक्षणया अखण्डार्थबोधकत्वाभ्युपगमान्न कश्चिद्दोषः । मनसा सहेत्यपरिपक्वमनसा सहेति तदर्थः । "मनसैवानुद्रष्टव्याम्" इति श्रुतेः । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतेः ॥ ४९ ॥ श्रुत्वेति ॥ केवलस्य भावः कैवल्यं निष्प्रपञ्चमात्मस्वरूपं तज्ज्ञायतेऽनेनेति कैवल्यज्ञानम् शुद्धब्रह्मप्राप्तिसाधनं ज्ञानमित्यर्थः ॥ ५० ॥ ततः कारणात् ये ये पदार्था दृश्यन्ते ते ते सर्वेऽपि मम विभूतयः । यच्छब्दबलात्तच्छब्दोऽध्याहार्यः ॥ ५१ ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ ५२ ॥
अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विशुद्धः।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोयं शिवरूपमस्मि ५३

अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहम् ॥ ५४ ॥
वेदैरशेषैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम्।
न पुण्यपापे मयि नास्ति नाशो
न जन्मदेहेन्द्रियबुद्धयश्च ॥ ५५ ॥

---

उक्तमर्थं कैवल्योपनिषत्संवादेन द्रढयति—मय्येवेति यावदध्यायसमाप्ति ॥ ५२ ॥ अणोरणीयानिति। सूक्ष्मादप्यतिसूक्ष्मः औपाधिकपरिच्छेदवानित्यर्थः। महानिति स्वरूपतोऽपरिच्छिन्नः। विशुद्धः प्रपञ्चमिथ्यात्वात्तल्लेपरहितः। नह्यारोपितेनारुणिम्ना स्वाभाविकं स्फटिकस्वच्छत्वमपैतीति भावः। पुरातनादिभिश्चतुर्भिर्विशेषणैर्व्यवह्रियमाणोऽहमेवास्मीति संबन्धः ॥ ५३ ॥ अपाणीति। ननु कारणाभावे कथं कार्यं घटेतेत्याशङ्क्याह—अचिन्त्यशक्तिरिति। अचिन्त्यशक्तिमत्तयैव सर्वमुपपद्यत इति भावः। विविक्तमनावृतं रूपं यस्य तथाभूतोऽहं विजानामि स्वरूपज्ञानेनैव द्रष्टाहं नतु वृत्तिबलेनेति भावः। मम कश्चिदपि वेत्ता नास्ति फलव्याप्यत्वाभावात् ॥ ५४ ॥ वेदैरिति। सर्वैर्वेदैरहमेव वेद्यः समधिगम्य इत्यर्थः। वेदान्तानां कर्ताहमेव। समस्तवेदवेत्ता चाहमेव। अयं भावः। यदा सगुण ईश्वरोऽहं समस्तवेदानां कर्ता तदा वेदवेद्यश्चाहमेव। वेदकर्तृत्वं च

न भूमिरापो न च वह्निरस्ति
न चानिलो मेऽस्ति न मे नभश्च।
एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम्।
समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥ ५६ ॥
एवं मां तत्त्वतो वेत्ति यस्तु राम महामते।
स एव नान्यो लोकेषु कैवल्यफलमश्नुते ॥ ५७ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे विभूतियोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

"यस्य निश्वसितं वेदाः" "ऋचः सामानि जज्ञिरे" इत्यादिप्रमाणात्। निर्गुणस्तु वेदान्तजन्यकृतिविषय एव नतु फलव्याप्तः। वृत्तिव्याप्यतानङ्गीकारे "तं त्वौपनिषदं पुरुषं पृच्छामि" "शास्त्रयोनित्वात्" इत्यादिविरोधः स्यात्। उक्तंच वार्तिककृद्भिः "फलव्याप्यत्वमेवात्र शास्त्रकृद्भिर्निवार्यते। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते ॥" इति। ब्रह्मण्याविद्यकधर्मानपवदति—न पुण्यपापे इति ॥ ५५ ॥ न भूमिरिति। गुहायामज्ञाने शेष इति तम्। "यो वेद निहितं गुहायाम्" इति श्रुतेः। निष्कलं निर्विकारम्। अद्वितीयं सजातीयादिभेदरहितम्। समस्तसाक्षिं साक्षीत्याख्यायमानः साक्षिः। कर्मण्यौणादिक इत्। सदसद्भ्यां कार्यकारणाभ्यां रहितम् ॥ ५६ ॥ उपसंहरति—एवमिति। नान्य इति। कर्ममात्रासक्तो वा सगुणोपासनासक्तो वा न मोक्षभागित्यर्थः। नचैवं कर्मणामुपासनानां च वैयर्थ्यम्। विविदिषासंपादनद्वारा सार्थक्यात् उपासनानामपि ज्ञानाङ्गत्वाच्च सार्थक्यात् ॥ ५७ ॥ इति श्रीलक्ष्मीनृसिंहपण्डितसूनुहरिदीक्षितकृतौ शिवगीताटीकायां बालानन्दिन्यां षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ७

श्रीराम उवाच।

भगवन्यन्मया पृष्टं तत्तथैव स्थितं विभो।
अत्रोत्तरं मया लब्धं त्वत्तो नैव महेश्वर ॥ १ ॥
परिच्छिन्नपरीमाणे देहे भगवतस्तव।
उत्पत्तिः सर्वभूतानां स्थितिर्वा विलयः कथम् ॥ २ ॥
स्वस्वाधिकारसंबद्धाः कथं नाम स्थिताः सुराः।
ते सर्वे त्वं कथं देव भुवनानि चतुर्दश ॥ ३ ॥

---

पूर्वाध्याये मूर्तस्त्वं तु परिच्छिन्नाकृतिरित्यारभ्य त्वं कथं पञ्चभूतादि जगदेतच्चराचरमिति यत् पृष्टं तत्र त्वया आख्यायिकैव कथिता; नस्तत्वनुभवारूढं यथा स्यात्तथोत्तरं दत्तमिति शिवं स्मारयन् राम उवाच—भगवन्निति। संशयबीजमिदं पूर्वाध्यायेऽहं सर्वाधिष्ठानमिति भगवतोक्तं तत्राहंकारावच्छिन्नस्य सर्वाधिष्ठानत्वे जीवेन किमपराद्धं सोऽपि सर्वाधिष्ठानं स्यात्। भवतु नामेति चेत् नियम्यनियामकत्वभङ्गः शास्त्रानर्थक्यं च प्रसज्येयातामिति ॥ १ ॥ तदेवाह—परिच्छिन्नेति। परिच्छिन्नं परिमाणं यस्य तथाभूते देहे। "उपसर्गस्य घञि—" इति सूत्रे बहुलग्रहणाद्दीर्घः। सर्वभूतानामुत्पत्त्यादिकं कथं घटेत, नहि पर्वतादयो भान्तीति भावः ॥ २ ॥ स्वस्वेति। स्वैःस्वैरधिकारैः संयुक्ताः सुरा इन्द्रादयः परिच्छिन्नपरिमाणे तव देहे कथं वा स्थिताः। तेषां स्वस्वाधिकारानुसारेण तथातथावकाशस्यापेक्षितत्वात् किंच ते सर्वे देवास्त्वं तथा चतुर्दशभुवनानि च त्वयीति कथमभेदः संभवति। यावदुपाधिबिम्बप्रतिबिम्बयोरभेदासंभवात्। भुवनैर्जडैः सहाभेदासंभवाच्च। तस्माद्यदुक्तं तन्न संगच्छत

त्वत्तः श्रुत्वापि देवात्र संदेहो मे महानभूत्।
अप्रत्यायितचित्तस्य संशयं छेत्तुमर्हसि ॥ ४ ॥

श्रीभगवानुवाच।

वटबीजे सुसूक्ष्मेऽपि महावटतरुर्यथा।
सर्वदास्तेऽन्यथा वृक्षः कुत आयाति तद्वद।
तद्वन्मम तनौ राम भूतानामागतिर्लयः ॥ ५ ॥
महासैन्धवपिण्डोऽपि जले क्षिप्तो विलीयते।
न दृश्यते पुनः पाकात्तत आयाति पूर्ववत् ॥ ६ ॥
प्रातःप्रातर्यथा लोको जायते सूर्यमण्डलात्।
एवं मत्तो जगत्सर्वं जायतेऽस्ति विलीयते।
मय्येव सकलं राम तद्वज्जानीहि सुव्रत ॥ ७ ॥

---

इति भावः ॥ ३ ॥ त्वत्त इति। त्वत्तः श्रुत्वापि श्रवणानन्तरमपि मे ममास्मिन्नर्थे त्वमेव सर्वमित्यस्मिन्नर्थे संदेहोऽभूज्जात इत्यर्थः। अप्रत्यायितं निश्चयमप्रापितं चित्तं यस्य तथाभूतस्य मे संशयमपाकुर्वित्यर्थः ॥ ४ ॥ एवं पृष्टः सन् प्रथमं युक्त्या समाधातुं भगवानुवाच—वटबीज इति। सुतरां सूक्ष्मेऽपि वटस्य बीजे सर्वदा महान्वटतरुर्यथास्ते तद्वन्मम तनौ भूतानामागत्यादिर्भवतीति योजनीयम्। एतेन प्रागसदेव घटादिकार्यमुत्पद्यत इति वदन्तस्तार्किकाः परास्ताः। अन्यथेति सूक्ष्मरूपानभ्युपगमे वृक्षः कुतो हेतोरायाति तद्वदेति संबन्धः। अयं भावः—असतो ह्युत्पत्तौ शशशृङ्गमपि उत्पद्येत। अविशेषादिति। "नासतो विद्यते भावो नाभावो विद्यते सतः" इति स्मृतेः। अत्रार्थे दीक्षितटीकायां विस्तरः ॥ ५ ॥ पूर्वं सतोऽपि घटादेरनुपलम्भे दृष्टान्तमाह—महासैन्धवेति। महानपि सैन्धवपिण्डः। जले क्षिप्तः सन्विलीयते सूक्ष्मावस्थापन्नो भवति। ततो न दृश्यते। पुनः पाकात्स्थूलावस्थापन्न उत्पद्यत इत्युच्यत इति तद्वत्सर्वं कार्यं पूर्वं सद्वेवोत्पद्यत इति भावः ॥ ६ ॥ प्रातरिति। आलोक आतपः। उपसं-

श्रीराम उवाच।

कथितेऽपि महाभाग दिग्जडस्य यथा दिशि।
निवर्तते भ्रमो नैव तद्वन्मम करोमि किम् ॥ ८ ॥

श्रीभगवानुवाच।

मयि सर्वं यथा राम जगदेतच्चराचरम्।
वर्तते तद्दर्शयामि न द्रष्टुं क्षमते भवान् ॥ ९ ॥
दिव्यं चक्षुः प्रदास्यामि तुभ्यं दशरथात्मज।
तेन पश्य भयं त्यक्त्वा मत्तेजोमण्डलं ध्रुवम् ॥ १० ॥
न चर्मचक्षुषा द्रष्टुं शक्यते मामकं महः।
नरेण वा सुरेणापि तन्ममानुग्रहं विना ॥ ११ ॥

श्रीसूत उवाच।

इत्युक्त्वा प्रददौ तस्मै दिव्यं चक्षुर्महेश्वरः।
अथादर्शयदेतस्मै वक्त्रं पातालसंनिभम् ॥ १२ ॥
विद्युत्कोटिप्रतीकाशमतिभीमभयावहम्।
तद्दृष्ट्वैव भयाद्रामो जानुभ्यामवनिं गतः ॥ १३ ॥

---

हरति—एवमिति। एवं सूर्यादालोकवन्मत्तो जगज्जायते तद्वत्सूर्यालोकवन्मय्येवास्ति विलीयते चेति जानीहि ॥ ७ ॥ एवं दृष्टान्तेन प्रतिपादितेऽप्यर्थे निश्चयमलभमानः श्रीराम उवाच—कथितेऽपीति। दिग्जडस्य दिङ्मूढस्य भ्रमो नैव निवर्तते। तद्वन्मम मदीयो भ्रम इत्यर्थः ॥ ८ ॥ यद्यपि शुद्धं पूर्णं ब्रह्मैव जगदधिष्ठानं नतु लीलाविग्रहविशिष्टं तथापि तद्द्वारोद्बोधनीयमित्याशयेनाह भगवान्—मयीति ॥ ९ ॥ दिव्यमिति। युगपत्सकलपरोक्षापरोक्षविषयदर्शनसामर्थ्यं दिव्यं चक्षुरित्युपचर्यते। तत्तुभ्यं दास्यामीत्यन्वयः ॥ १० ॥ मदनुग्रहं विना दर्शयिष्यमाणं मामकं महस्तेजः केनापि द्रष्टुं दुःशकमित्याह—नेति ॥ ११ ॥ १२ ॥ विद्युदिति। अतिभीमभयावहं अति-

प्रणम्य दण्डवद्भूमौ तुष्टाव च पुनःपुनः ।
अथोत्थाय महावीरो यावदेव प्रपश्यति ॥ १४ ॥
वक्त्रं पुरभिदस्तावदन्तर्ब्रह्माण्डकोटयः ।
चटका इव लक्ष्यन्ते ज्वालामालासमाकुलाः ॥ १५ ॥
मेरुमन्दरविन्ध्याद्या गिरयः सप्तसागराः ।
दृश्यन्ते चन्द्रसूर्याद्याः पञ्चभूतानि ते सुराः ॥ १६ ॥
अरण्यानि महानागा भुवनानि चतुर्दश ।
प्रतिब्रह्माण्डमेवं तु दृष्ट्वा दशरथात्मजः ॥ १७ ॥
सुरासुराणां संग्रामांस्तत्र पूर्वापरानपि ।
विष्णोर्दशावतारांश्च तत्कर्तव्यान्यपि द्विजाः ॥ १८ ॥
पराभवांश्च देवानां पुरदाहं महेशितुः ।
उत्पद्यमानानुत्पन्नान्सर्वानपि विनश्यतः ॥ १९ ॥
दृष्ट्वा रामो भयाविष्टः प्रणनाम मुहुर्मुहुः ।
उत्पन्नतत्त्वज्ञानोऽपि बभूव रघुनन्दनः ॥ २० ॥
अथोपनिषदां सारैरर्थैस्तुष्टाव शंकरम् ॥ २१ ॥

---

भयंकराणामपि भयप्रदमित्यर्थः ॥ १३ ॥ १४ ॥ चटकाः कलविङ्का इव ॥१५॥ मेरुमन्दरेति । पूर्वं ये परमेश्वरस्य समन्ताद्दृष्टास्ते देवा इत्यर्थः ॥ १६ ॥ महाभागेति शौनकंप्रति संबुद्धिः ॥ १७ ॥ सुरासुरेति । पूर्वापरान् । जातान् जनिष्यमाणांश्चेत्यर्थः । तत्कर्तव्यानीति तेष्ववतारेषु कर्तव्यानि रावणवधादीनि च ॥१८॥ पराभवानिति । दैत्येभ्य इति शेषः । पुरदाहं त्रिपुरसंहारम् ॥ १९ ॥ प्रति ब्रह्माण्डं पूर्वोक्तं सर्वं दृष्ट्वा उत्पन्नतत्त्वज्ञानोऽपि दृश्यमानस्याघटितरूपतया दृष्टान्तेन पूर्वानुभूतप्रपञ्चस्यापि मिथ्यात्वं ब्रह्मणो निर्गुणत्वं कालत्रयाबाध्यत्वं चेति तत्त्वज्ञानम् । उत्पन्नं तत्त्वज्ञानं यस्य स तथा एवंभूतो बभूवेति संबन्धः ॥ २० ॥ अथेति । उपनिषदां मध्ये सा-

श्रीराम उवाच।

देव प्रपन्नार्तिहर प्रसीद प्रसीद विश्वेश्वर विश्ववन्द्य।
प्रसीद गङ्गाधर चन्द्रमौले मां त्राहि संसारभयादनाथम् २२

त्वत्तो हि जातं जगदेतदीश
त्वय्येव भूतानि वसन्ति नित्यम्।
त्वय्येव शंभो विलयं प्रयान्ति
भूमौ यथा वृक्षलतादयोऽपि ॥ २३ ॥

ब्रह्मेन्द्ररुद्राश्च मरुद्गणाश्च
गन्धर्वयक्षासुरसिद्धसङ्घाः।
गङ्गादिनद्यो वरुणालयाश्च
वसन्ति शूलिंस्तव वक्रमन्ति ॥ २४ ॥

त्वन्मायया कल्पितमिन्दुमौले
त्वय्येव दृश्यत्वमुपैति विश्वम्।
भ्रान्त्या जनः पश्यति सर्वमेत-
च्छुक्तौ यथा रूप्यमहिं च रज्जौ ॥ २५ ॥

---

रभूतैः। अर्थैरर्थप्रतिपादकैः श्लोकैरित्यर्थः ॥ २१ ॥ त्राहि त्रायस्वेत्यर्थः। त्राहीत्यार्षं रूपम् ॥२२॥ त्वत्त इति। उपादानत्वं निमित्तत्वं च पञ्चम्यर्थः। "सोऽकामयत बहु स्यां प्रजायेयेति" इति श्रुतेः। उभयस्य चेह संभवात्। कार्यमात्रोत्पत्तिस्थितिलयानामुपादानमेव शरणमिति दृष्टान्तेन द्रढयति—भूमाविति ॥२३॥ ब्रह्मेन्द्रेति। वरुणालयाः समुद्राः। ब्रह्मादयः सर्वे तव वक्रमन्ति वक्रस्य समीपे मध्ये इति यावत्। अन्तिशब्दोऽन्तिकपर्यायो वेदे प्रसिद्धो "यदन्ति यच्च दूरके" इत्यादौ। यद्यपि अन्तिकयोगे पञ्चम्या षष्ठ्या वा भाव्यं तथाप्यार्षो विभक्तिव्यत्ययः ॥ २४ ॥ ननु ब्रह्मणो जगदुपादानत्वे सविकारत्वं स्यादित्याशङ्क्य तत्र परिणामवाद एव न विवर्तवाद इति

**तेजोभिरापूर्य जगत्समग्रं प्रकाशमानः कुरुषे प्रकाशम् ।**
**विनाप्रकाशं तव देवदेव न दृश्यते विश्वमिदं क्षणेन ॥२६॥**

प्रतिपादयन्नाह—त्वन्माययेति । जनः एतद्विश्वं त्वयि भ्रान्त्या तथा पश्यति । यथा शुक्तौ रूप्यम् । नन्वन्यत्र दृष्टस्यान्यत्र भानं हि भ्रमः । यथा रजतं हट्टादौ दृष्टं शुक्तिकायां संस्कारेण प्रतीतं भ्रम इत्युच्यते । इयमेवान्यथाख्यातिः । ब्रह्मविना विश्वं कुत्र दृष्टं तदधुना ब्रह्मणि प्रतीतमिति भ्रमत्वेनोच्यत इत्याशङ्क्याह—त्वन्माययेति । त्वन्मायया त्वय्येव कल्पितं त्वय्येव दृश्यत्वमुपैति नान्यत्रेति भावः । न वयमन्यथाख्यातिवादिनो नाप्यसत्ख्यातिवादिनः किंत्वनिर्वचनीयख्यातिवादिनः । तथाच मायया सर्वमुपपादयितुं सुशकम् । नच सिद्धान्ते जगतः क्वचिदप्यननुभवादारोप्यप्रमाहितसंस्काराभावे कथं ब्रह्मण्यारोप इति वाच्यम् । लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् । नच प्राथमिकारोपे का गतिरिति वाच्यम् । संसारप्रवाहस्यानादित्वात् । तदुक्तम् "आरोपे सति निमित्तानुसरणं नहि निमित्तमस्तीत्यारोपः" इति । तस्मादिहैवाविद्यया कल्पितमित्यभ्युपेयम् । तदुक्तम् "अक्षमा भवतः केयं साधकत्वं प्रकल्प्यते । किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥" इति दिक् ॥ २५ ॥ परमतेऽन्यथाख्यात्यसत्ख्यात्योरपरोक्षतानुपपत्तिं ध्वनयन्सिद्धान्तेऽपरोक्षतां समर्थयते—तेजोभिरिति । समस्तं जगत् तेजोभिरापूर्य व्याप्य प्रकाशमानस्त्वं प्रकाशत इति प्रकाशस्तं कुरुषे । तव प्रकाशं विना मिथ्याभूतं जगन्न दृश्येत । किंच इदं विश्वं क्षणेन न दृश्यते । अधिष्ठानसाक्षात्कारे सतीति शेषः । अयं भावः । वियदाद्युपहितचैतन्येन तादात्म्यापन्नं वियदादि प्रकाशते "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । प्रमातृचैतन्यं विषयचैतन्यं प्रमाणचैतन्यं च यत्राभिन्नं भवति तत्रैव विषयापरोक्ष्यं भवति । अतएव

अल्पाश्रयो नैव बृहन्तमर्थं
धत्तेऽणुरेको नहि विन्ध्यशैलम् ।
तद्भ्रूक्रमात्रे जगदेतदस्ति
त्वन्माययैवेति च निश्चिनोमि ॥ २७ ॥
रज्जौ भुजंगो भयदो यथैव
न जायते नास्ति न चैति नाशम् ।
त्वन्मायया केवलमात्तरूपं
तथैव विश्वं त्वयि नीलकण्ठ ॥ २८ ॥
विचार्यमाणे तव यच्छरीर-
माधारभावं जगतामुपैति ।

---

घटं साक्षात्करोमि वह्निमनुमिनोमीत्यनुव्यवसायः । तच्चापरोक्षत्वं देशान्तरीयस्य तुच्छस्य च न संभवतीति भावः ॥ २६ ॥ प्रपञ्चस्य मिथ्यात्वं युक्त्यन्तरेणापि साधयति—अल्पेति । अल्पश्चासावाश्रयश्च स तथा स्वस्वापेक्षया बृहन्तमर्थं न धत्ते । अत्र दृष्टान्तः । एकोऽणुर्विन्ध्यशैलं नहि धत्त इति । ततः किं तत्राह । एतज्जगद्भ्रूक्रमात्रे अस्ति । तस्मात्त्वन्माययैव कृतं नतु वास्तवमिति निश्चिनोमि । तदुक्तम् "दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः" इति ॥ २७ ॥ ननु प्रपञ्चस्य मिथ्यात्वे अर्थक्रियाकारित्वं न स्यात् । तथाच तद्बन्धनिवृत्त्यर्थं शास्त्रमनारभ्यं स्यादित्याशङ्क्याह—रज्जाविति । यथा रज्जौ भुजङ्गो वस्तुतो न जायते अतएव नाशं च नैति । "जातस्य हि ध्रुवो मृत्युः" इति स्मृतेः । तथापि भयदः । अर्थक्रियाकारीत्यर्थः । तथा त्वन्मायया केवलं त्वयि आत्तरूपं प्राप्तरूपं कल्पितमिति यावत् । सदसद्विलक्षणस्वरूपमित्यर्थः । एवंभूतं जगदपि कार्यक्षमं भवतीत्यर्थः । प्रातिभासिकस्यापि रज्जुसर्पादेरर्थक्रियाकारित्वमस्ति किमुत व्यावहारिकस्येति भावः । तस्मात्तदुच्छेदाय शास्त्रमारम्भणी-

तदप्यवश्यं मदविद्ययैव
पूर्णश्चिदानन्दमयो यतस्त्वम् ॥ २९ ॥
पूजेष्टपूर्तादिवरक्रियाणां
भोक्तुः फलं यच्छसि शस्तमेव ।
मृषैतदेवं वचनं पुरारे
त्वत्तोऽस्ति भिन्नं नच किंचिदेव ॥ ३० ॥

---

यमेवेति भावः ॥ २८ ॥ ननु प्रपञ्चस्य मिथ्यात्वे तदधिष्ठानस्य मद्विग्रहस्यापि मिथ्यात्वापत्तौ तत्र विश्वमध्यस्तमिति। कथं ब्रुवे व्याघातादित्याशङ्क्य त्वद्देहेनोपलक्षितचिन्मात्राभिप्रायेणेदं ब्रुव इत्याह— विचार्यमाण इति। यदिदं तव शरीरं जगतामाधारभावमुपैति तदप्यविचाररमणीयमेव। विचार्यमाणे तु तच्छरीरं ममाविद्ययैव कल्पितम्। त्वं तु पूर्णश्चिदानन्दरूप एव। तथाचेदं विग्रहादिकमप्यध्यस्तमिति भावः ॥ २९ ॥ नन्वेवं ब्रह्मभिन्नस्य सर्वस्यापि मिथ्यात्वे कर्मकाण्डादिश्रुतिरपि मिथ्यार्थबोधिका स्यादित्याशङ्क्य समाधत्ते— पूजेति। पूजादीनामिति शेषः। इष्टं यागः। पूर्तं तडागारामादि। तथा वरक्रियाणां दानाध्ययनादीनां फलं स्वर्गादि तच्च फलं भोक्तुर्यज्वादेस्त्वं यच्छसि। "फलमत उपपत्तेः" इति न्यायात्। अयं भावः। यावदविद्यं भेदवासनावासितानां कर्मकाण्डादिश्रुतिप्रतिपादितं सर्वं शस्तमेव प्रमाणमेवेत्यर्थः। महता पुण्योदयेनोत्पन्नब्रह्मसाक्षात्कारस्य हे पुरारे, किंचिदेव किमपि प्रपञ्चजातं त्वत्तो भिन्नं नास्तीति पश्यतस्तत्त्वज्ञानवतो दृष्ट्या एतत्पूर्वार्धप्रतिपादितार्थकम्। एवं तज्जातीयमन्यच्च वचनं मृषेत्यन्वयः। तथाच श्रुतिः "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति, स्मृतिश्च "नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन" इति। "न निरोधो न चोत्पत्तिर्न बन्धो नच साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" इति

अज्ञानमूढा मुनयो वदन्ति
पूजोपचारादिबहिःक्रियाभिः।
तोषं गिरीशो भजतीति मिथ्या
कुतस्त्वमूर्तस्य तु भोगलिप्सा॥ ३१॥
किंचिद्दलं वा चुलकोदकं वा
यत्त्वं महेश प्रतिगृह्य दत्से।
त्रैलोक्यलक्ष्मीमपि तज्जनेभ्यः
सर्वं त्वविद्याकृतमेव मन्ये॥ ३२॥
व्याप्नोषि सर्वा विदिशो दिशश्च
त्वं विश्वमेकः पुरुषः पुराणः।
नष्टेऽपि तस्मिंस्तव नास्ति हानि-
र्घटे विनष्टे नभसो यथैव॥ ३३॥

---

श्रुत्यन्तराच्च॥३०॥अविद्यावद्विषयकाणि शास्त्राणीत्याह—अज्ञानेति। अज्ञानेन मूढाश्च ते अमननशीलाश्च ते च तथोक्ताः पुरुषाः पूजादिभिर्बहिःक्रियाभिर्गिरीशस्तोषं भजतीति वदन्ति। अविद्यादशामाश्रित्य प्रतिपादयन्तीत्यर्थः। तच्च ज्ञानदृष्ट्या मिथ्या तोषस्य मायावृत्तिरूपत्वात्। अमूर्तस्य पूर्णस्यानन्दरूपस्य भोगानां लिप्सा कुतः कस्मादपि हेतोर्नैवेति भावः। अज्ञैस्तु यथोक्तं सर्वं कार्यमेव। "धर्मेण पापमपनुदति" इत्यादिश्रुतेः। "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इत्यादिस्मृतेश्च॥ ३१॥ अस्यैव प्रपञ्चः—किंचिदिति। दलं तुलसीबिल्वादिपत्रं चुलकपरिमितमुदकं वा यत्त्वं प्रतिगृह्य भक्तजनादिति शेषः। त्रैलोक्यलक्ष्मीं यज्जनेभ्यः दत्से तत्सर्वं अविद्याकृतमेव मिथ्यैवेति मन्ये निश्चिनोमि। दातृसंप्रदानदेयादीनामाविद्यकत्वादिति भावः॥ ३२॥ व्याप्नोषीति। एकः सजातीयविजातीयस्वगतभेदशून्यः पुरुषः। सर्वस्मात्कार्यात्पूर्वमेव विद्यमानः। "पूर्वमे-

यथैकमाकाशगमर्कबिम्बं
क्षुद्रेषु पात्रेषु जलान्वितेषु ।
भजत्यनेकप्रतिबिम्बभावं
तथा त्वमन्तःकरणेषु देव ॥ ३४ ॥
सुसर्जने वाप्यवने विनाशे
विश्वस्य किंचित्तव नास्ति कार्यम् ।
अनादिभिर्देहभृतामदृष्टै-
स्तथापि तत्स्वप्नवदातनोषि ॥ ३५ ॥

---

चाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । त्वं विश्वं व्याप्नोषि अधिष्ठानत्वेन तादात्म्यापन्नः सन्ननुगच्छसि । तस्मिन्विश्वस्मिन्नष्टेऽपि तव हानिर्नास्ति । अत्र दृष्टान्तः । घटे विनष्टे यथैव नभसो हानिर्नास्ति रजतादिबाधेऽपि शुक्त्याद्यवस्थानदर्शनात् । तस्मात्त्वमेव साक्षात्करणीयः किं विषयमृगतृष्णयेति भावः ॥३३॥ ननूक्तरीत्या वियदादेर्मिथ्यात्वे जीवानां बहुत्वादद्वैतक्षतिः स्यादेव । नहि वियदादिवज्जीवोऽपि मिथ्येति युक्तम् । बन्धमोक्षयोर्वैयधिकरण्यापत्तेरित्याशङ्क्याह—यथेति । हे देव, यथाकाशगमेकमेवार्कबिम्बं क्षुद्रेषु जलान्वितेषु पात्रेष्वनेकप्रतिबिम्बभावं भजति तथा त्वमन्तःकरणेष्वनेकप्रतिबिम्बभावं भजसि । तथाच श्रुतिः—"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति । तथा चोपाधीनां मिथ्यात्वेऽपि नोपहितस्य मिथ्यात्वमतो न बन्धमोक्षयोर्वैयधिकरण्यम् । औपाधिकभेदस्य मिथ्यात्वान्न द्वैतभङ्ग इति भावः ॥३४॥ नन्वेवं परमार्थतो जीवब्रह्मणोरविशेषे जीववदीश्वरोऽपि संसारी किं न स्यादित्याशङ्क्याह—सुसर्जन इति । विश्वस्य सृष्ट्यादिषु सत्सु तत्प्रयुक्तं कार्यं तव किमपि नास्ति पूर्णकामत्वात् । तथापि अनादिभिः

स्थूलस्य सूक्ष्मस्य जडस्य देह-
द्वयस्य शंभो न चिदं विनास्ति।
अतस्त्वदारोपणमातनोति
श्रुतिः पुरारे सुखदुःखयोः सदा ॥ ३६ ॥

नमः सच्चिदम्भोधिहंसाय तुभ्यं
नमः कालकण्ठाय कालात्मकाय।
नमस्ते समस्ताघसंहारकर्त्रे
नमस्ते मृषाचित्तवृत्त्यैकभोक्त्रे ॥ ३७ ॥

---

प्रवाहरूपैर्देहरूपैर्देहभृतां जीवानामदृष्टैः सहकारिभूतैः स्वप्रवत्स्वर्गादीनातनोपि। तथा तच्च जीवेशयोर्बिम्बप्रतिबिम्बभावकृतो विशेष इति भावः ॥ ३५ ॥ तदेवमीश्वरस्य निरावरणत्वं प्रतिपाद्य जीवस्य सावरणत्वं प्रतिपादयति—स्थूलस्येति। स्थूलस्य पञ्चीकृतमहाभूतकार्यस्य सूक्ष्मस्यापञ्चीकृतमहाभूतकार्यस्य लिङ्गाख्यस्य च देहस्य अं विना अततीत्यः आत्मा 'अत सातत्यगमने' तं विना चित् चेतनत्वं नास्ति। किंभूतस्य देहद्वयस्य जडस्य। काष्ठरूपस्येत्यर्थः। सा चित् यदि देहद्वयस्य परिणामभूता स्यात्तर्हि जडः स्यात्। यस्माच्चित्तादात्म्यापन्नत्वेन देहद्वयस्य चित्त्वम्। अतः कारणाद्देहद्वयजन्ययोः सुखदुःखयोः श्रुतिस्त्वदारोपणं त्वयि प्रतिबिम्बभूते आरोपणमातनोति। प्रतिपादयतीत्यर्थः। अयोयोगाद्वह्नेस्ताडनादिवत्। वह्नियोगादयसो दग्धृत्वादिवत्। तथाच श्रुतिः "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इत्यादिः। 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणमपीत्यनुसंधेयम् ॥ ३६ ॥ एवमीश्वरसंधिवशादधिगतपरमार्थोऽपि पुनर्बाधितानुवृत्त्यनुवृत्तया भक्त्या लीलाविग्रहाय भगवते नमस्कुर्वन्प्रार्थयते—नमइति। सच्चिदम्भोधौ हंस इव तस्मै। कर्पूर-

सूत उवाच।

एवं प्रणम्य विश्वेशं पुरतः प्राञ्जलिः स्थितः।
विस्मितः परमेशानं जगदे रघुनन्दनः॥ ३८॥

श्रीराम उवाच।

उपसंहर विश्वात्मन्विश्वरूपमिदं तव।
प्रतीतं जगदैकात्म्यं शंभो भवदनुग्रहात्॥ ३९॥

श्रीभगवानुवाच।

पश्य राम महाबाहो मत्तो नान्योऽस्ति कश्चन।

सूत उवाच।

इत्युक्त्वैवोपसंजह्रे स्वदेहे देवतादिकान्॥ ४०॥
मीलिताक्षः पुनर्हर्षाद्यावद्रामः प्रपश्यति।
तावदेव गिरेः शृङ्गे व्याघ्रचर्मोपरि स्थितम्॥ ४१॥
ददर्श पञ्चवदनं नीलकण्ठं त्रिलोचनम्।
व्याघ्रचर्माम्बरधरं भूतिभूषितविग्रहम्॥ ४२॥
फणिकङ्कणभूषाढ्यं नागयज्ञोपवीतिनम्।
व्याघ्रचर्मोत्तरीयं च विद्युत्पिङ्गजटाधरम्॥ ४३॥

---

गौरतया हंसत्वेनोत्प्रेक्षा। मृषाभूतानां चित्तवृत्तीनां एकभोक्त्रे मुख्यसाक्षिणे इत्यर्थः॥ ३७॥ एवमिति। विस्मितः अदृष्टपूर्वत्वात्॥ ३८॥ उपसंहरेति॥ ३९॥ पश्येति। पूर्वार्धे भगवद्वाक्यं उत्तरार्धमारभ्य सूतवाक्यम्। अतो नान्योऽस्ति कश्चन जगदाश्रय इत्यर्थः॥ ४०॥ मीलिताक्ष इति। लीलाविग्रहस्य मायिकत्वं क्रियातः प्रदर्शयितुं रूपान्तरं स्थानान्तरमाविष्कृत्य स्थितमिति भावः॥ ४१॥ ददर्शेति। व्याघ्रचर्मैवाम्बरं तस्य धरम्। भूतिर्भस्म ऐश्वर्यं वा

एकाकिनं चन्द्रमौलिं वरेण्यमभयप्रदम् ।
चतुर्भुजं खण्डपरशुं मृगहस्तं जगत्पतिम् ॥ ४४ ॥
अथाज्ञया पुरस्तस्य प्रणम्योपविवेश सः ।
अथाह रामं देवेशो यद्यत्प्रष्टुमभीच्छसि ।
तत्सर्वं पृच्छ राम त्वं मत्तो नान्योऽस्ति ते गुरुः ॥४५॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे विश्वरूपदर्शनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ८

श्रीराम उवाच ।

पाञ्चभौतिकदेहस्य चोत्पत्तिर्विलयः स्थितिः ।
स्वरूपं च कथं देहे भगवन्वक्तुमर्हसि ॥

---

॥ ४२ ॥ ४३ ॥ एकाकिनमिति । मृगो हस्ते यस्य तम् । खट्वादेः परा सप्तमीति साधुः ॥ ४४ ॥अथेति । गौतमीतीरस्थं स्वविग्रहादिकमुपसंहृत्य रामं गिरिशिखरस्थं ज्ञात्वेत्यर्थः ॥ ४५ ॥ इति श्रीलक्ष्मीनृसिंहपण्डितसूनुहरिदीक्षितकृतौ शिवगीताटीकायां बालानान्दिन्यां सप्तमोऽध्यायः ॥ ७ ॥

पूर्वाध्यायान्ते शंभुनोक्ते यद्यत्प्रष्टुमभीच्छसि तत्सर्वं पृच्छ राम त्वमिति तदेवोपजीव्य स्वयमधिगततत्त्वोऽपि लोकानुग्रहार्थं विरक्तिसाधनं देहादिनिःसारत्वं शिवमुखेनैव प्रकटयितुं रामः पृच्छति— पाञ्चभौतिकेति । देहे लिङ्गशरीरे पाञ्चभौतिकदेहस्य स्थूलस्य उत्पत्त्यादिकं कथं केन प्रकारेण इदं वक्तुमर्हसीत्यन्वयः ॥ १ ॥

श्रीभगवानुवाच ।

पञ्चभूतैः समारब्धो देहोऽयं पाञ्चभौतिकः ।
तत्र प्रधानं पृथिवी शेषाणां सहकारिता ॥ २ ॥
जरायुजोऽण्डजश्चैव स्वेदजश्चोद्भिदस्तथा ।
एवं चतुर्विधः प्रोक्तो देहोऽयं पाञ्चभौतिकः ॥ ३ ॥
मानसस्तु परः प्रोक्तो देवानामेव स स्मृतः ।
तत्र वक्ष्ये प्रथमतः प्रधानत्वाज्जरायुजम् ॥ ४ ॥
शुक्रशोणितसंभूतवृत्तिरेव जरायुजः ।
स्त्रीणां गर्भाशये शुक्रमृतुकाले विशेद्यदा ।
रजसा योषितो युक्तं तदेव स्याज्जरायुजम् ॥ ५ ॥
बाहुल्याद्रजसः स्त्री स्याच्छुक्राधिक्ये पुमान्भवेत् ।
शुक्रशोणितयोः साम्ये जायतेऽथ नपुंसकः ॥ ६ ॥

---

पञ्चभूतैरिति । अयमपरोक्षः प्राणिनां देहः पाञ्चभौतिकः पञ्चभूतानां परिणामः । यतः पञ्चभूतैरारब्धः तत्र तस्मिन्देहे पृथिवी प्रधानं मुख्येत्यर्थः । 'वैशेष्यात्तद्वादः' इति न्यायात् । एवमाप्ये देहादौ द्रष्टव्यम् । शेषा इत्यर्थः । तदंशानामल्पीयस्त्वात्सहकारित्वमुक्तम् ॥ २ ॥ उद्भिनत्ति भूमिमित्युद्भिदः । इगुपधलक्षणः कप्रत्ययः ॥३॥ प्रधानत्वादिति । जरायुजं मनुष्यदेहं पुरुषार्थसाधनत्वेन मुख्यत्वादिति भावः ॥ ४ ॥ शुक्रेति । शुक्रशोणिताभ्यां संभूता जाता वृत्तिरुत्पत्तिर्यस्य स तथा । एवंभूत एव जरायुजो नतु तन्निरपेक्षोत्पत्तिक इत्यर्थः । पूर्वश्लोकस्यैव शेषभूतमर्धमिदम् । स्त्रीणामिति । गर्भ आशेतेऽस्मिन्निति गर्भाशयः पेशी सैव जरायुशब्दवाच्या । "गर्भाशयो जरायुः स्यात्"इत्यमरः । तस्मिन् गर्भाशये शुक्रं ऋतुकाले विशेत्तदा योषितः स्त्रिया रजसा शोणितेन युक्तं तदेव शुक्रं जरायुजं स्यात् ॥ ५ ॥ शुक्रशोणितयोरन्यतराधिक्ये सति जाय-

ऋतुस्नाता भवेन्नारी चतुर्थदिवसे ततः।
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि ॥ ७ ॥
तत्रायुग्मदिने स्त्री स्यात्पुमान्युग्मदिने भवेत् ॥ ८ ॥
षोडशे दिवसे गर्भो जायते यदि सुभ्रुवः।
चक्रवर्ती तदा राजा जायते स न संशयः ॥ ९ ॥
ऋतुस्नाता यस्य पुंसः साकाङ्क्षं मुखमीक्षते।
तदाकृतिर्भवेद्गर्भस्तत्पश्येत्स्वामिनो मुखम् ॥ १० ॥

---

मानं भेदविशेषमाह—बाहुल्यादिति। 'न भ्राणनपान्नवेदानासत्या' इति निपातनान्नपुंसकशब्दः साधुः ॥ ६ ॥ ऋतुस्नातेति। षोडशदिनरूपमवधिमभिव्याप्येत्यर्थः। तथाच रजोदर्शनादारभ्याषोडशदिनं ऋतुकाल इति फलितार्थः। एवं स्थिते चतुर्थदिवसे नारी ऋतुस्नाता भवेत् ॥ ७ ॥ ततः पञ्चमदिनमारभ्यायुग्मासु पञ्चमसप्तमादिषु रात्रिषु भर्तृसंयोगे स्त्री स्यात्। युग्मासु रात्रिषु पुमान् स्यात्। अयुग्मासु रात्रिष्वपि शुक्रबाहुल्ये पुमान् स्यात्किंतु स्त्र्याकृतिः। तथा युग्मासु रात्रिषु शोणितातिरेके स्त्री स्यात्किंतु पुरुषाकृतिरित्यविरोधो द्रष्टव्यः। चतुर्थरात्रौ गमनं वैकल्पिकम्। अप्रमाणोपन्यासस्तु दीक्षितकृतटीकायां द्रष्टव्य इति दिक् ॥ ८ ॥ षोडश इति। अत्र सर्वत्र दिवसशब्दो रात्र्युपलक्षकः। चक्रवर्ती सार्वभौमः। ब्राह्मणश्चेज्ज्ञानपारगः स्यात् ॥ ९ ॥ ऋतुस्नातेति। तत्तस्मात्कारणात्स्वामिनो भर्तुः। अत्र लिङ्गपुराणसंग्रहः—"चतुर्थ्यां रात्रौ—विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम्। दारिद्र्यार्णवमग्नं च तनयं सा प्रसूयते। पञ्चम्यामुत्तमां कन्यां षष्ठ्यां सत्पुत्रं सप्तम्यां कन्यां अष्टम्यां संपन्नं पुत्रं" इत्यादिफलानि वर्णितानि। "त्रयोदश्यां व्यभिचारिणीं कन्यां चतुर्दश्यां सत्पुत्रं पञ्चदश्यां धर्मज्ञां कन्यां षोडश्यां ज्ञानपारगं पुत्रं प्रसूयते" इत्यादिफलं ज्ञेयमिति दिक् ॥ १० ॥

या स्त्रीचर्मावृतिः सूक्ष्मा जरायुः सा निगद्यते।
शुक्रशोणितयोर्योगस्तस्मिन्नेव भवेद्यतः।
तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः ॥ ११ ॥
अण्डजाः पक्षिसर्पाद्याः स्वेदजा मशकादयः।
उद्भिज्जा वृक्षगुल्माद्या मानसाश्च सुरर्षयः ॥ १२ ॥
जन्मकर्मवशादेव निषिक्तं स्मरमन्दिरे।
शुक्रं रजःसमायुक्तं प्रथमे मासि तद्द्रवम् ॥ १३ ॥
बुद्बुदं कललं तस्मात्ततः पेशी भवेदिदम्।
पेशीघनं द्वितीये तु मासि पिण्डः प्रजायते ॥ १४ ॥
कराङ्घ्रिशीर्षकादीनि तृतीये संभवन्ति हि।
अभिव्यक्तिश्च जीवस्य चतुर्थे मासि जायते ॥ १५ ॥
ततश्चलति गर्भोऽपि जनन्या जठरे स्वतः।
पुत्रश्चेद्दक्षिणे पार्श्वे कन्या वामे च तिष्ठति ॥ १६ ॥

---

या स्त्रीति। स्त्रियाश्चर्मरूपा आवृतिः पेशीतियावत्। सा जरायुरिति गद्यते। जरायुः सेति स्त्रीलिङ्गमार्षम्। यस्मात्कारणात्। तेन कारणेन जरायुजः प्रोक्तः कविभिरिति शेषः॥ ११ ॥ अण्डजा इति। मनसो जाता मानसाः। योगसामर्थ्यमेव तत्र कारणमिति भावः॥ १२ ॥ अथ पिण्डोत्पत्तिक्रममाह। जन्मकर्मेति भाविजन्मनः कारणं यत्कर्म तद्वशादेवेति संबन्धः। स्त्रीयोनौ निषिक्तं तद्रजसासहितं द्रवरूपं सत्प्रथमे मासि तिष्ठति ॥ १३ ॥ बुद्बुदमिति। इदं द्रवरूपं शुक्रं बुद्बुदरूपं भवति। तस्मात्कललं द्रप्सरूपं भवति। ततः पेशी भवति ततः पेशीघनं भवतीति प्रथममास एव क्रमाद्भाविन्यश्चतस्रोऽवस्था निर्दिष्टाः। द्वितीयमासे तु पिण्डो जायते॥ १४ ॥ अभिव्यक्तिरिति। जीवस्य जीवोपाधेर्लिङ्गदेहस्येति यावत्॥ १५ ॥ तत इति। जनन्या जठरे

नपुंसकस्तूदरस्य भागस्तिष्ठति मध्यमे।
अतो दक्षिणपार्श्वे तु शेते माता पुमान्यदि ॥ १७ ॥
अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा।
विहाय श्मश्रुदन्तादीञ्जन्मानन्तरसंभवान् ॥ १८ ॥
चतुर्थे व्यक्तता तेषां भावानामपि जायते।
पुंसां स्थैर्यादयो भावा भूतत्वाद्यास्तु योषिताम् ॥ १९ ॥
नपुंसके च ते मिश्रा भवन्ति रघुनन्दन।
मातृजं चास्य हृदयं विषयानभिकाङ्क्षति ॥ २० ॥
ततो मातुर्मनोऽभीष्टं कुर्याद्गर्भविवृद्धये।
तां च द्विहृदयां नारीमाहुर्दौहृदिनीं ततः ॥ २१ ॥
अदानाद्दोहदानां स्युर्गर्भस्य व्यङ्गतादयः।
मातुर्यद्विषये लोभस्तदार्तो जायते सुतः ॥ २२ ॥

---

गर्भः स्वतोऽपि स्वत एवेत्यर्थः ॥ १६ ॥ १७ ॥ अङ्गप्रत्यङ्गेति। तदा चतुर्थमासे अङ्गानि करचरणादीनि प्रत्यङ्गानि अङ्गुल्यादीनि तेषां भागा अंशाः सूक्ष्मा युगपत् स्युः। जन्मन उत्पत्तेरनन्तरं संभव उत्पत्तिर्येषां तान् तथोक्तान् श्मश्रुदन्तादीन्विहाय ॥ १८ ॥ चतुर्थे इति। तेषां भावानां वक्ष्यमाणानामपि अभिव्यक्तिर्जायते। के ते भावा इत्याकाङ्क्षायामाह—पुंसामिति। योषितां भूतत्वाद्याः। भूतत्वं चाञ्चल्यम् ॥ १९ ॥ नपुंसक इति। मातृजमिति गर्भस्य हृदयं मातुर्हृदयाज्जायत इत्यर्थः। अतो मातुराकाङ्क्षितानेव विषयानभिकाङ्क्षति ॥ २० ॥ तत इति। ततः कारणाद्गर्भस्य विवृद्धये मातुर्मनसो यद्यदन्नपानाद्यभीष्टं तत्कुर्यात्। तां चेति। द्वे हृदये यस्यास्तां दौहृदिनीम्। पृषोदरादित्वात्साधुः ॥ २१ ॥ अदानादिति। दोहदानां गर्भिण्यभिलषितार्थानामदानात् गर्भस्य व्यङ्गता अङ्गन्यूनत्वम्। आदिपदेन अशक्तबुद्धिमान्द्यत्वादीनां संग्रहः ॥ २२ ॥

प्रबुद्धं पञ्चमे चित्तं मांसशोणितपुष्टता ।
षष्ठेऽस्थिस्नायुनखरकेशलोमविविक्तता ॥ २३ ॥
बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।
पादान्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ॥ २४ ॥
उद्विग्नो गर्भसंवासादस्ति गर्भभयान्वितः ॥ २५ ॥
आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंयुतः ।
हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ ॥ २६ ॥
अनुभूता महासह्यपुरो मर्मच्छिदोऽसकृत् ।
करम्भवालुकास्तप्ताश्चादह्यन्तासुखाशयाः ॥ २७ ॥

---

प्रबुद्धमिति । पञ्चमे प्रबुद्धं ज्ञानवद्भवति । षष्ठे तु नखराणि नखानि केशाः शिरोरुहा रोमाण्यङ्गरुहाणि ॥ २३ ॥ बलवर्णाविति । सप्तमे बलवर्णौ च उपचितौ भवतः । अङ्गपूर्णता सप्तमे सर्वाङ्गसंपूर्णो भवतीति वचनात्पादाभ्यामन्तरितौ यौ हस्तौ ताभ्यां श्रोत्ररन्ध्रेऽपिधायाच्छाद्य ॥ २४ ॥ स जन्तुः किंविधस्तत्राह—उद्विग्न इति । गर्भसंवासाद्गर्भसंवाससंकटादित्यर्थः । उद्विग्नः संजातत्रासः । तथा गर्भभयेन भाविगर्भप्रतिसंधानजनितेन भयेनान्वितो युक्तः सन्नस्ति तिष्ठति ॥ २५ ॥ आविर्भूत इति । आविर्भूतः प्रबोधो भूतभविष्याद्यनेकजन्मज्ञानं यस्य स तथा निर्विण्णः पश्चात्तापवान् शोशुचीति पुनःपुनः शोचतीत्यर्थः । यङ्लुङन्ताल्लटि रूपमिदम् ॥ २६ ॥ भूतजन्मदुःखान्यनुस्मृत्य शोचति—अनुभूतेति । महासह्याश्च ताः पुरश्च तास्तथोक्ताः । नारकिशरीराणीत्यर्थः । "शतं मा पुर आयसीररक्षन्" इति श्रुतेः । कर्मधारये कृते "ऋक्पूरब्धूः" इति समासान्तेऽचि "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति स्त्रीत्वादाप् । मयानुभूता इति संबन्धः । करम्भवालुकाः यवभर्जनार्थं तप्ताः सिकताः ।

जठरानलसंतप्तपित्ताख्यरसविप्रुषः ।
गर्भाशये निमग्नं तु दहन्त्यतिभृशं हि माम् ॥ २८ ॥
उदर्यकृमिवक्त्राणि कूटशाल्मलिकण्टकैः ।
तुल्यानि च तुदन्त्यार्तं पार्श्वास्थिक्रकचार्दितम् ॥ २९ ॥
गर्भे दुर्गन्धभूयिष्ठे जठराग्निप्रदीपिते ।
दुःखं मयाप्तं यत्तस्मात्कनीयः कुम्भपाकजम् ॥ ३० ॥
पूयासृक्श्लेष्मपायित्वं वान्ताशित्वं च यद्भवेत् ।
अशुचौ क्रिमिभावश्च तत्प्राप्तं गर्भशायिना ॥ ३१ ॥
गर्भशय्यां समारुह्य दुःखं यादृङ्मयापि तत् ।
नातिशेते महादुःखं निःशेषनरकेषु तत् ॥ ३२ ॥

---

तप्ताः पुनश्च संतापिताः । कीदृश्यः । असुखं आशेते आस्विति असुखाशयाः । एवंभूता मां दहन्तीति संबन्धः ॥ २७ ॥ २८ ॥ उदर्येति । उदरे भवा उदर्याः । "शरीरावयवाद्यत्" । उदर्यकृमीणां वक्त्राणि आर्तं मां तुदन्ति व्यथयन्तीत्यन्वयः । कीदृशानि वक्त्राणि । कूटशाल्मलेः कण्टकैः तुल्यानि । कीदृशं माम् । मातुः पार्श्वभागयोर्यान्यस्थीनि तान्येव क्रकचाः करपत्राणि तैरर्दितं पीडितम् ॥२९॥ गर्भे इति—मातुर्गर्भे । कीदृशे । दुर्गन्धभूयिष्ठे पूतिगन्धिबहुले । किंच । जठराग्निना प्रदीपिते यन्मया दुःखमाप्तमनुभूतं तस्माद्दुःखात्कुम्भपाकाख्ये नरके जातं दुःखं कनीयः । अत्यल्पमित्यर्थः ॥ ३० ॥ पूयेति । पूयो रक्तविकारः असृग्रक्तं श्लेष्मा कफः तत्पायित्वं वान्ताशित्वम् । उदरस्थमन्नमेव वान्तत्वेनोपचर्यते तद्भक्षणशीलत्वम् । अशुचौ विण्मूत्रादौ कृमिभावश्च । तत् त्रितयमपि गर्भशायिना मया आप्तमिति संबन्धः ॥ ३१ ॥ गर्भशय्यामिति । गर्भ एव शय्या तां समारुह्याश्रित्य मया यादृग्दुःखं आपि प्राप्तं तद्दुःखं कर्म, समस्तेषु नरकेषु दुःखं कर्तृ तन्नातिशेते । आकल्पं भोक्तव्यसर्वनरक-

एवं स्मरन्पुरा प्राप्ता नानाजातीश्च यातनाः ।
मोक्षोपायमभिध्यायन्वर्ततेऽभ्यासतत्परः ॥ ३३ ॥
अष्टमे त्वक्स्मृती स्यातामोजस्तेजश्च हृद्भवम् ।
शुभ्रमापीतरक्तं च निमित्तं जीविते मतम् ॥ ३४ ॥
मातरं च पुनर्गर्भं चञ्चलं तत्प्रधावति ।
ततो जातोऽष्टमे मासि न जीवत्योजसोज्झितः ॥ ३५ ॥
किंचित्कालमवस्थानं संस्कारात्पीडिताङ्गवत् ।
समयः प्रसवस्य स्यान्मासेषु नवमादिषु ॥ ३६ ॥

---

दुःखादपि गर्भवासदुःखमसह्यमिति भावः ॥ ३२ ॥ एवमिति । नानाविधा जातीः संकरजातीः पुल्कसत्वाद्याः यातनास्तीव्रवेदनाश्च स्मरन् मोक्षस्य उपायं चाभिध्यायन् केनोपायेन मे मोक्षो भविष्यतीति च चिन्तयन्नित्यर्थः । वर्तते तिष्ठति । कीदृक् । अभ्यासः समस्तदुःखचिन्तनपूर्वकं मोक्षोपायचिन्तनवृत्तिः तत्र तत्परस्तदेकनिष्ठ इत्यर्थः ॥ ३३ ॥ अष्टम इति । त्वक्चर्मस्मृतिर्गमनरूपं कर्म ते उभे स्याताम् । हृदि भवं हृद्भवं ओजस्तेजश्च स्यात् । तयोः स्वरूपमाह । शुद्धं यदोजःशब्दवाच्यं तच्छुभ्रं यत्तेजःशब्दवाच्यं तत् आ ईषत्पीतं रक्तं च । तदोजस्तेजश्च धातुपरिणामविशेषात्मकं जीविते निमित्तं तदष्टमे मासि मतं तत्र स्फुटीभवतीत्यर्थः ॥ ३४ ॥ मातरमिति । यत्पूर्वोक्तमोजः गर्भस्यादृष्टवशात् चञ्चल्यते गर्हितं चलतीति चञ्चलम् । अतएव पुनर्मातरं च पुनश्च गर्भं प्रधावति । अनियतावस्थितिर्भवतीत्यर्थः । ततो हेतोः अष्टमे मासि जातो न जीवति । प्रागुक्तेन ओजसा उज्झितस्त्यक्तः ॥ ३५ ॥ किंचित्कालमिति । नवमादिषु मासेषु प्रसवस्य समयः स्यात् । तेषु मासेषु संस्कारात्प्रसवप्रतिबन्धकालदृष्टात्किंचित्कालमवस्थानं भवतीति । तत्र दृष्टान्तः ।

मातुरस्रवहां नाडीमाश्रित्यान्ववतारिता।
नाभिस्थनाडीगर्भस्य मात्राहाररसावहा।
तेन जीवति गर्भोऽपि मात्राहारेण पोषितः ॥ ३७ ॥
अस्थियन्त्रविनिष्पिष्टः पतितः कुक्षिवर्त्मना।
मेदोऽसृग्दिग्धसर्वाङ्गो जरायुपुटसंवृतः ॥ ३८ ॥
निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः।
यन्त्रादेवं विनिर्मुक्तः पतत्युत्तानशाय्युत ॥ ३९ ॥
अकिंचित्कस्तदा लोकैर्मांसपेशीवदास्थितः।
श्वमार्जारादिदंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ॥ ४० ॥

---

भारादिना श्रान्तस्तूष्णीं तिष्ठति तद्वत् ॥ ३६ ॥ मातुरिति। अस्रं शोणितं वहत्यनयेत्यस्रवहा तां नाडीमाश्रित्य नाभिस्था नाडी अन्ववतारिता विस्तारितास्ति। सा च नाडी गर्भस्य मातुराहारो मात्राहारस्तत्संबन्धिनं रसं आवहति। अस्रवहनाड्याश्रितनाभिस्थनाडीप्रापितमात्राहाररसेन गर्भो जीवतीति भावः। तदेव स्पष्टमाचष्टे—नेति। पोषितस्तेनान्नरसेन मात्राहारेण स्वल्पाहारभूतेनापि तद्गर्भो जीवतीत्यर्थः ॥ ३७ ॥ प्रसूतिप्रकारमाह—अस्थियन्त्रेति। योनिचक्रे यान्यस्थीनि तदेव यन्त्रं तेन विनिष्पिष्टो व्यथिताङ्गः सन् कुक्षिवर्त्मना कुक्षिर्बस्तिस्ततो योनिरेवंभूतेनेत्यर्थः। बहिः पतितो निःसृतो भवतीति शेषः। किंभूतः। मेदश्च असृक् च ताभ्यां दिग्धमालिप्तं सर्वमङ्गं यस्य स तथा। जरायुरेव पुटमपिधानं तेन संवृतः ॥ ३८ ॥ निष्क्रामन्निति। एवमुक्तप्रकारेण यन्त्राद्विनिर्मुक्तः सन्पतति। एवं गर्भवासदुःखं निरूपितम्। उत्तानशायीत्यादिना शैशवदुःखं निरूपयति। उत अपिच उत्तानशायी डिम्भ इत्यर्थः ॥ ३९ ॥ अकिंचित्कः किंचिदपि कर्तुं असमर्थः। सर्वथा पराधीन इति भावः। अतएव लोकैर्मांसपेशीवद्व्यवस्थितः। दण्डपाणिभिः स्वजनैः ॥४०॥

पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि ।
पूयं पयोवदज्ञानाद्दीर्घकष्टं तु शैशवम् ॥ ४१ ॥
श्लेष्मणा पिहिता नाडी सुषुम्ना यावदेव हि ।
व्यक्तवर्णं च वचनं तावद्वक्तुं न शक्यते ॥ ४२ ॥
अतएव च गर्भेऽपि रोदितुं नैव शक्यते ॥ ४३ ॥
दृप्तोऽथ यौवनं प्राप्य मन्मथज्वरविह्वलः ।
गायत्यकस्मादुच्चैस्तु तथाकस्माच्च वल्गति ॥ ४४ ॥
आरोहति तरून्वेगाच्छान्तानुद्वेजयत्यपि ।
कामक्रोधमदान्धः सन्न कांश्चिदपि वीक्षते ॥ ४५ ॥
अस्थिमांसशिरालाया वामाया मन्मथालये ।
उत्तानपूतिमण्डूकपाटितोदरसंनिभे ।
आसक्तः स्मरबाणार्त आत्मना दह्यते भृशम् ॥ ४६ ॥
अस्थिमांसशिरात्वग्भ्यः किमन्यद्वर्तते वपुः ।
वामानां मायया मूढो न किंचिद्वीक्षते जगत् ॥ ४७ ॥

---

विवेकशून्यत्वं प्रतिपादयति—पितृवदिति। डाकिनीं राक्षसीविशेषम्। दीर्घं कष्टं यस्मिंस्तत्तादृशं शैशवमिति ॥ ४१ ॥ श्लेष्मणेति । सुषुम्ना ब्रह्मनाडीत्युच्यते सा यावच्छ्लेष्मणा पिहितास्ति तावत्स्पष्टाक्षरं वचनं वक्तुं न शक्यते ॥ ४२ ॥ ४३ ॥ यौवनं निरूपयति—दृप्तोऽथेति । दृप्तो गर्वितः अकस्मात् निर्निमित्तं वल्गति स्वपराक्रमं विकत्थते ॥ ४४ ॥ ४५ ॥ अस्थि च मांसं च शिरा च अस्थिमांसशिरं तत् आसमन्ताल्लाति गृह्णाति सा तथा तस्या वामायाः स्त्रिया मन्मथालये उपस्थे । उत्तानं पूति दुर्गन्धं ईदृशं यन्मण्डूकस्य पाटितं विशीर्णं उदरं तत्सदृशे । आसक्तः सन्नात्मना मनसा ॥ ४६ ॥ अस्थीति । वामानां सुन्दरीणां वपुः शरीरं अस्थि मांसप्रभृतिभ्योऽन्यद्वर्तते किं नास्त्येवेत्यर्थः । यद्यपि अस्थ्यादीनामेकत्वमेवापेक्षितं प्राण्यङ्ग-

निर्गते प्राणपवने देहो हन्त मृगीदृशः।
यथाहि जायते नैव वीक्ष्यते पञ्चषैर्दिनैः॥ ४८॥
महापरिभवस्थानं जरां प्राप्यातिदुःखितः।
श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यति॥ ४९॥
सन्नदन्तो मन्ददृष्टिः कटुतिक्तकषायभुक्।
वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः॥ ५०॥
गदायुतसमाविष्टः परिभूतः स्वबन्धुभिः।
निःशौचो मलदिग्धाङ्ग आलिङ्गितवरोषितः॥ ५१॥

---

त्वात्तथाप्यार्षत्वमेव गतिः। यद्यप्येवं तथापि मायया योषिन्मय्या मूढो युवा किमपि जगन्नेक्षते यथावन्न जानाति। किंतु स्त्रीमयमेव पश्यतीत्यर्थः॥ ४७॥ निर्गत इति। प्राणपवने निर्गते सति पञ्चभिः षड्भिर्वेति पञ्चषैर्दिनैः। मृगीदृशो देहो यथा हि जायते यामवस्थां प्राप्नोति तन्न वीक्ष्यते न पर्यालोच्यते। मूढेन यूनेति शेषः। उक्तं च "नारीस्तनभरनाभिनिदेशं दृष्ट्वा मायामोहावेशम्। एतत्सर्वं मांसविकारं मनसि विचारय वारंवारम्" इति॥ ४८॥ वार्धकदुर्दशामाह—महापरिभवेति। महांश्चासौ परिभवस्तिरस्कारस्तस्य स्थानम्। अजहल्लिङ्गत्वात्तथैव विशेषणम्। "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इतिवत्। एवंविधां जरां प्राप्यातिदुःखितस्तिष्ठतीति शेषः। जग्धं भक्षितमन्नं न जीर्यति जीर्णं न भवतीत्यर्थः॥ ४९॥ सन्ना विशीर्णा दन्ता यस्य स तथा। कटुतिक्तादीन् रसान् व्याधिनिवृत्तये भुङ्क्त इति तथाभूतः। वातेन भुग्ना नम्राः कट्याद्यवयवा यस्य स तथा। अत एवाबलः बलहीनः॥ ५०॥ गदेति। गदानां रोगाणामयुतेन दशसहस्रेण समाविष्टो व्याप्तः। निःशौचः शौचशून्यः। मलेन दिग्धं लिप्तमङ्गं यस्य स तथा। आलिङ्गितं वरं महत् उषितं दाहो येन स तथा। 'उष दाहे' अस्माद्धातोर्भावे क्तः। एवमा-

ध्यायन्नसुलभान्भोगान्केवलं वर्तते चलः।
सर्वेन्द्रियक्रियालोपाद्धास्यते बालकैरपि ॥ ५२ ॥
ततो मृतिजदुःखस्य दृष्टान्तो नोपलभ्यते ।
यस्माद्बिभ्यति भूतानि प्राप्तान्यपि परां रुजम् ॥ ५३ ॥
नीयते मृत्युना जन्तुः परिष्वक्तोऽपि बन्धुभिः ।
सागरान्तर्जलगतो गरुडेनेव पन्नगः ॥ ५४ ॥
हा कान्ते हा धनं पुत्राः क्रन्दमानं सुदारुणम् ।
मण्डूक इव सर्पेण मृत्युना नीयते नरः ॥ ५५ ॥
मर्मसून्मथ्यमानेषु मुच्यमानेषु संधिषु ।
यद्दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः ॥ ५६ ॥

---

दिरोगग्रस्तत्वाद्बन्धुभिः स्त्रीपुत्रादिभिः परिभूतोऽनादृत इत्यर्थः ॥५१॥ ध्यायन्निति । असुलभान्स्वाद्वन्नमृदुशय्यादीन्भोगान्केवलं ध्यायंस्तिष्ठति । नतु भगवन्तं ध्यायतीति भावः । चलतीति चलः कम्पमानदेह इत्यर्थः । सर्वेषामिन्द्रियाणां यथायथं व्यापारलोपात् बालकैरपि हास्यते । उपहास्यत इत्यर्थः ॥ ५२ ॥ तत इति । ततो वार्धकानन्तरं मरणं तेन जातस्य दुःखस्य दृष्टान्तो नैवोपलभ्यते । यस्मान्मरणाद्भूतानि बिभ्यति । कीदृशानि । परां महतीं रुजं पीडां रोगरूपां दारिद्र्यादिरूपां वा प्राप्तान्यपि ॥ ५३ ॥ नीयत इति । बन्धुभिः स्त्रीपुत्रादिभिः परिष्वक्तोऽपि आलिङ्गितोऽपि । अत्र दृष्टान्तः—सागरेति । पद्भ्यां न गच्छतीति पन्नगः सर्पः ॥ ५४ ॥ हा कान्ते इति । यमदूतान्दृष्ट्वा सुतरां दारुणं यथा भवति तथा हा कान्ते इत्यादि क्रन्दमान अक्रोशन्नपि नरः मृत्युना सर्पेण मण्डूक इव नीयते ॥ ५५ ॥ मर्मस्विति । उन्मथ्यमानेषु । प्राणवायुना वियुज्यमानेषु उत्कृष्यमाणेष्विति पाठेऽयमेवार्थः । तथा हस्तपादादीनां च संधिषु मुच्यमानेषु सत्सु म्रियमाणस्य यद्दुःखं तन्मुमुक्षुभिः स्मर्यताम् । तस्माद्देहे

दृष्टावाक्षिप्यमाणायां संज्ञया म्रियमाणया।
मृत्युपाशेन बद्धस्य त्राता नैवोपलभ्यते ॥ ५७ ॥
संरुध्यमानस्तमसा महच्चित्तमिवाविशन्।
उपाहूतस्तदा ज्ञातीनीक्षते दीनचक्षुषा ॥ ५८ ॥
अयःपाशेन कालेन स्नेहपाशेन बन्धुभिः।
आत्मानं कृष्यमाणं तमीक्षते परितस्तथा ॥ ५९ ॥
हिक्कया बाध्यमानस्य श्वासेन परिशुष्यतः।
मृत्युना कृष्यमाणस्य न खल्वस्ति परायणम् ॥ ६० ॥
संसारयन्त्रमारूढो यमदूतैरधिष्ठितः।
क्व यास्यामीति दुःखार्तः कालपाशेन योजितः ॥ ६१ ॥

---

विश्वासो न विधेय इति भावः ॥ ५६ ॥ दृष्टाविति। दृष्टावाक्षिप्यमाणायां यमदूतैरिति शेषः। ह्रियमाणया संज्ञया उपलक्षितस्य तात्कालिक्या यातनया निःसंज्ञस्येत्यर्थः। मृत्युपाशेन बद्धस्य। एवंविधस्य जन्तोस्त्राता रक्षको नोपलभ्यत एव। तस्मात्तस्मिन्काले यस्त्राता ईश्वरः स चादावेव शरणीकरणीय इति भावः ॥ ५७ ॥ संरुध्यमान इति। तमसा अज्ञानेन संरुध्यमानः। तथापि महच्चित्तं विवेकम्। चिती संज्ञाने भावे क्तः। आविशन्निव सावधानतां प्राप्तः सन्निव। ज्ञातिभिरुपाहूतः सन् तदा तस्यामवस्थायामपि ज्ञातीन्दीनचक्षुषा ईक्षते। संभाषणासमर्थत्वादीक्षणमात्रं करोति तदेतन्महतो विवेकस्य कार्यम्। तदभावे ईक्षणमपि दुःसाध्यमिति भावः। तस्मात्तस्मिन्काले ईश्वरध्यानार्थं यावज्जीवं ध्यानाभ्यासो विधेय इति व्यञ्जनम् ॥५८॥ अयःपाशेनेति। कालेन कर्त्रा अयःपाशेन करणेन तमुक्तावस्थापन्नमात्मानं परितः सर्वतः कृष्यमाणमीक्षते। इदं महतो विवेकस्य फलं किमु वक्तव्यं तदा भगवच्चिन्तनम् ॥ ५९ ॥ हिक्कयेति। प्राणवायुगतिमान्द्यं हिक्का तस्या गतिप्राचुर्यं श्वासस्तेन च। परायणं रक्षकः ॥ ६० ॥ संसार एव यन्त्रं भ्रमच्चक्रं तदारूढो यम-

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम्।
इतिकर्तव्यतामूढः कृच्छ्राद्देहात्त्यजत्यसून् ॥ ६२ ॥
यातनादेहसंबद्धो यमदूतैरधिष्ठितः।
इतो गत्वानुभवति या यास्ता यमयातनाः।
तासु यल्लभते दुःखं तद्वक्तुं सहते कुतः ॥ ६३ ॥
कर्पूरचन्दनाद्यैस्तु लिप्यते सततं हि यत्।
भूषणैर्भूष्यते चित्रैः सुवस्त्रैः परिवार्यते ॥ ६४ ॥
अस्पृश्यं जायतेऽप्रेक्ष्यं जीवत्यक्तं सदा वपुः।
निष्कासयन्ति निलयात्क्षणं न स्थापयन्त्यपि ॥ ६५ ॥
दह्यते च ततः काष्ठैस्तद्भस्म क्रियते क्षणात्।
भक्ष्यते वा सृगालेन गृध्रकुक्कुरवायसैः।
पुनर्न दृश्यते सोऽथ जन्मकोटिशतैरपि ॥ ६६ ॥

---

दूतैरधिष्ठित आक्रान्तः सन्। अतः परं क्व यास्यामीति दुःखार्तः। कालपाशेन योजितः बद्धः ॥ ६१ ॥ किं करोमीति। किं करोमीत्यादिकं किंचित्कालं चिन्तयित्वा तत इतिकर्तव्यतायां मूढः सन् कष्टाद्देहादसून्प्राणान्त्यजति ॥ ६२ ॥ ततः किमित्यत आह—यातनेति। इतोऽस्माल्लोकाद्गत्वा यमलोकमित्यध्याहारः। यातनायै देहो यातनादेहस्तेन संबद्धः सन् ताः प्रसिद्धाः यमयातनाः। या या अनुभवति तासां मध्ये एकस्यां यातनायां यद्दुःखं लभतेऽनुभवति तत्किमपि वक्तुं कुतः सहते। एकयातनादुःखं वक्तुमशक्यं किमु वक्तव्यं सर्वयातनादुःखमिति भावः ॥ ६३ ॥ पूर्वशरीरस्य परिणाममाह—कर्पूरेति। परिवार्यते वेष्ट्यते ॥ ६४ ॥ तदेव वपुर्जीवेन लिङ्गशरीरेण त्यक्तं सत्स्पर्शायोग्यं अप्रेक्ष्यं दर्शनायोग्यं च जायते। ज्ञातयो निलयाद्गृहान्निष्कासयन्ति क्षणमपि तु न स्थापयन्ति गृहे ॥ ६५ ॥ दह्यत इति। संस्काराभावे सृगालेन जम्बुकेन गृध्रेण

माता पिता गुरुजनः स्वजनो ममेति
मायोपमे जगति कस्य भवेत्प्रतिज्ञा।
एको यतो व्रजति कर्मपुरःसरोऽयं
विश्रामवृक्षसदृशः खलु जीवलोकः ॥ ६७ ॥
सायंसायं वासवृक्षं समेताः
प्रातःप्रातस्तेन तेन प्रयान्ति।
त्यक्त्वान्योन्यं तं च वृक्षं विहङ्गा
यद्वत्तद्वज्ज्ञातयोऽज्ञातयश्च ॥ ६८ ॥
मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः।
घटयन्त्रवदश्रान्तो बंभ्रमीत्यनिशं नरः ॥ ६९ ॥
गर्भे पुंसः शुक्रपाताद्यदुक्तं मरणावधि।
तदेतस्य महाव्याधेर्मत्तो नान्योऽस्ति भेषजम् ॥ ७० ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे विश्वरूपदर्शनं नाम अष्टमोऽध्यायः ॥ ८ ॥

---

कुक्कुरेण वायसेन वा भक्ष्यते। कुक्कुरः सारमेयः। अथ स देहः पुनर्न दृश्यते ॥ ६६ ॥ मातेति। मायोपमे ऐन्द्रजालिकरचितहस्त्यादिसदृशे जगति मम मातेत्यादिप्रतिज्ञा कस्य भवेत्। न कस्यापीत्यर्थः। अयं जीवः स्वकर्मपुरःसरः सन्नेक एव यतो व्रजति नतु मातापित्रादिभिः सह। तथाचानादौ संसारे सर्वेषां परस्परं मातृपितृभावोऽविशिष्ट इति भावः। जीवलोको मनुष्यलोकः विश्रामवृक्षेण सदृशः। विश्राम इत्यार्षः ॥ ६७ ॥ वृक्षसाम्यं विवृणोति—सायंसायमिति। तेन तेन पथेति शेषः। तद्वत्स्वस्वकर्मानुरोधेन कंचित्कालमेकत्र स्थित्वा यथायथं प्रयान्तीति भावः ॥ ६८ ॥ मृतिबीजमिति। बंभ्रमीति पुनःपुनर्भ्राम्यति। यङ्लुकि रूपम् ॥ ६९ ॥ शुक्रपातादारभ्य मरणावधि यदुक्तं स चासावेष चेति कर्मधारयः।

# नवमोऽध्यायः ९

श्रीभगवानुवाच।

देहस्वरूपं वक्ष्यामि शृणुष्वावहितो नृप।
मत्तो हि जायते विश्वं मय्यैवैतत्प्रधार्यते।
मय्येवेदमधिष्ठाने लीयते शुक्तिरौप्यवत् ॥ १ ॥
अहं तु निर्मलः पूर्णः सच्चिदानन्दविग्रहः।
असङ्गो निरहंकारः शुद्धं ब्रह्म सनातनम् ॥ २ ॥
अनाद्यविद्यायुक्तः सन् जगत्कारणतां व्रजे ॥ ३ ॥

---

तस्यै तस्येत्यर्थः। महाव्याधेर्भेषजं मत्तोऽन्यः पदार्थो नास्ति। भेषजशब्दो नित्यं नपुंसकः ॥ ७० ॥ इति श्रीशिवगीताटीकायां बालानन्दिन्यामष्टमोऽध्यायः ॥ ८ ॥

अष्टमाध्यायोपक्रमे पाञ्चभौतिकदेहस्य चोत्पत्तिर्विलयः स्थितिः स्वरूपं च कथमिति रामेण पृष्टं तत्रोत्पत्तिस्थितिविलया निरूपिताः। स्वरूपं तु इह प्राधान्येन निरूप्यत इति प्रतिजानीते—देहस्वरूपमिति। अवहितः समाहितमनाः शृणुष्व शृण्वित्यर्थः। तत्रादौ शरीरस्य विश्वान्तःपातित्वाद्विश्वोत्पत्तिलया मय्यधिष्ठान एवेति प्रतिपादयति—मत्त इति। मद्विषयकं यदज्ञानं तत्कार्यं विश्वं मद्विषयकज्ञानेन विलीयते। शुक्त्यवच्छिन्नचैतन्यविषयकज्ञानकार्यं रजतं यथा शुक्तिसाक्षात्काराद्विलीयते तद्वत् ॥ १ ॥ नचैतावता मम विकारित्वमित्याह—अहं त्विति। अहंतु निर्मलोऽविद्यारहितः पूर्णस्त्रिविधपरिच्छेदविधुरः सच्चिदानन्दस्वरूपः। असङ्गः "असङ्गो ह्ययं पुरुषः" इति श्रुतेः। निरहंकारः कर्तृत्वाद्यहंकाररहितः शुद्धं ब्रह्म सनातनम् ॥ २ ॥ एवंविधोऽप्यहं अनाद्यविद्यया युक्तः सन् जगत्कारणतां व्रजे व्रजामि। प्राप्नोमीति यावत्। कारणत्वं नाम

अनिर्वाच्या महाविद्या त्रिगुणा परिणामिनी।
रजः सत्वं तमश्चेति तद्गुणाः परिकीर्तिताः ॥ ४ ॥
सत्वं शुक्लं समादिष्टं सुखज्ञानास्पदं नृणाम्।
दुःखास्पदं रक्तवर्णं चञ्चलं च रजो मतम् ॥ ५ ॥
तमः कृष्णं जडं प्रोक्तमुदासीनं सुखादिषु ॥ ६ ॥

---

कर्तृत्वम्। "जन्माद्यस्य यतः" इति सूत्रे तथा प्रतिपादनात्। नच कर्ता कुलालादिः कार्येषु घटादिष्वन्वेति तथा ब्रह्मणोऽपि कार्यान्वयो न स्यात्। तथात्वे 'तत्तु समान्वयात्' इत्यधिकरणविरोधः प्रसज्येतेति वाच्यम्। "सोऽकामयत" इति निमित्तत्वं "बहु स्याम्" इत्युपादानत्वं च ब्रह्मणः प्रतिपादितमाकरे। तथाचाभिन्ननिमित्तोपादानं ब्रह्मेति सिद्धान्तः। अविद्यया ब्रह्मणश्च संबन्धोऽप्याविद्यकोऽनिर्वचनीय एव। तथाच प्रपञ्चो ब्रह्मापेक्षया विवर्तः मायापेक्षया परिणाम इति सिद्धान्तः ॥ ३ ॥ अनिर्वाच्येति। उपादानसमसत्ताकान्यथाभावत्वं परिणामत्वं वियदादीनामविद्यापरिणामित्वात्। स परिणामोऽस्या अस्तीति परिणामिनी। अनिर्वाच्या सतीति निर्वक्तुमशक्या ज्ञानबाध्यत्वात्। असतीत्यपि निर्वक्तुमशक्या जगद्रूपेण प्रतीयमानत्वात्। अतएव सदसद्विलक्षणा। तदुक्तं भागवते। "ऋतेर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि। तद्विद्यादात्मनो मायां यथाभासो यथा तमः।" इति। पुनः कीदृशी। त्रिगुणा। तानेव गुणानाह—रज इति। महाविद्येत्यनेन मूलाज्ञानमेव जगदुपादानं नतु मूलज्ञानं शुक्तिज्ञानेन रजताभासनिवृत्तौ एकजीवाज्ञाननिवृत्तौ वा सकलप्रपञ्चनिवृत्त्यापत्तेः ॥ ४ ॥ गुणानां प्रत्येकं कार्यं दर्शयति—सत्वमिति। नृणां सुखाकारज्ञानाकारवृत्त्योः कारणं सत्वम्। रजः चञ्चलं रक्तवर्णं दुःखास्पदं दुःखकारणम् ॥ ५ ॥ तमः कृष्णवर्णं जडं उदासीनं सुखादिषु। सुखादिजननासमर्थमित्यर्थः। तेच गुणाः

अतो मम समायोगाच्छक्तिः सा त्रिगुणात्मिका।
अधिष्ठाने च मय्येव भजते विश्वारूपताम्।
शुक्तौ रजतवद्रज्जौ भुजङ्गो यद्वदेव तु॥ ७॥
आकाशादीनि जायन्ते मत्तो भूतानि मायया।
तैरारब्धमिदं सर्वं देहोऽयं पाञ्चभौतिकः॥ ८॥

---

परस्पराभिभवात्मकाः। "रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा॥" इति श्रुतेः॥ ६॥ अत इति। यतः कारणात्स्वतोऽसङ्गोदासीनस्य सदा स्वानन्दपूर्णस्यासत्यानेकविधदुःखात्मकप्रपञ्चरचनानुपपत्त्या "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इति श्रुत्या न वास्तवी शक्तिः कल्प्यते। अतः कारणान्मम समायोगात् आविद्यकसंबन्धान्मदीयशक्तिर्माया अनिर्वचनीयत्वेन प्रसिद्धा। त्रिगुणात्मिका मय्येवाधिष्ठाने विश्वरूपतां नानाविधस्वरूपत्वं भजते। यथोक्तानुपपत्तिसिद्धार्थानुवादिनी श्रुतिरपि "अजामेकाम्" इत्यादिः। ननु जगच्चेन्मायापरिणामस्तदाधारं चेद्ब्रह्म तर्ह्याधेयजगद्रूपेण धर्मेण तस्याधिकारित्वं स्यात्। "उपयन्नुपयन्धर्मो विकरोति हि धर्मिणम्" इति न्यायादित्याशङ्क्य जगतः कल्पितत्वेन न स्वाश्रयविकारहेतुत्वमिति दृष्टान्तेन प्रतिपादयति— शुक्ताविति॥ ७॥ विश्वरूपतां भजत इत्युक्तं तदेव विवृणोति। आकाशादीनीति। यद्यपि महत्तत्त्वादीनि वक्तव्यानि तथापि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतिमनुसृत्योक्तम्। तदुक्तम् "क्रमेण युगपच्चैषा सृष्टिर्ज्ञेया यथाश्रुति। विविधश्रुतिसद्भावाद्विविधस्वप्रदर्शनात्।" इति। तैराकाशादिभिरिदं सर्वं ब्रह्माण्डमारब्धमयं पाञ्चभौतिको देहोऽप्यारब्ध इत्यर्थः। अत्रेदं तात्पर्यम्। मायातत्कार्यस्याधिष्ठानं ब्रह्मैव परिणामिनी माया उपादानं तूभयमपि। तत्र स्वबुद्धिबाध्यकार्याधारत्वमधिष्ठानत्वम्। रजतस्य शुक्तिवत्। स्वबाधकं बाध्यकार्याधारत्वं परिणामित्वं तादात्म्यवत्कारणमु-

पितृभ्यामशितादन्नात्षट्कोशं जायते वपुः ।
स्नायवोऽस्थीनि मज्जा च जायन्ते पितृतस्तथा ॥ ९ ॥
त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि ।
भावाः स्युः षड्विधास्तस्य मातृजाः पितृजास्तथा ।
रसजा आत्मजाः सत्त्वसंभूताः स्वात्मजास्तथा ॥ १० ॥
मृदवः शोणितं मेदो मज्जा प्लीहा यकृद्गुदम् ।
हृन्नाभीत्येवमाद्याः स्युर्भावा मातृभवा मताः ॥ ११ ॥
श्मश्रुरोमकचस्नायुशिराधमनयो नखाः ।
दशनाः शुक्रमित्यादिस्थिराः पितृसमुद्भवाः ॥ १२ ॥

---

पादानमिति । तादात्म्यं तु भिन्नत्वे सत्यभिन्नत्वताकत्वमिति विवेकः। ब्रह्म तु विवर्तोपादानं माया तु परिणामोपादानं वेदितव्यमिति दिक् ॥ ८ ॥ पितृभ्यामिति । अशिताद्भुक्तादन्नात् षट् कोशा यस्मिन् तथाभूतं वपुः ॥ ९ ॥ त्वङ्मांसेति । भावयन्ति शरीरमिति भावास्तस्य शरीरस्य । तथाच गर्भोपनिषदि श्रूयते "एतस्मिन्षाट्कौशिके शरीरे त्रीणि पितृतस्त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः" इति ॥ १० ॥ मृदव इति । तत्र मृदवो भावाः मता इत्यन्वयः । के ते शोणितं मेदो वपा । "हृन्मेदस्तु वपा वसा" इत्यमरः । मज्जा सारभूतो धातुः । प्लीहा गुल्मः । यकृत्कालखण्डं । गुदमपानम् । हृत् हृदयम् । मज्जाप्लीहानौ नान्तपुंलिङ्गौ । नाभी स्त्रीलिङ्गः । "कृदिकारादक्तिनः" इति ङीप् ॥ ११ ॥ श्मश्रु पुरुषस्य मुखे रोमवृद्धिः । रोमशिरसोऽन्यत्र शरीरे । कचाः शिरोरुहाः । स्नायुः वसापरपर्यायो धातुविशेषः । शिरा धमनय इति । यद्यपि शिराधमन्योः पर्यायत्वं तथापि सूक्ष्मनाडी शिरा स्थूला तु धमनीति भेदो ज्ञेयः । नखाः प्रसिद्धाः । दशना दन्ताः । शुक्रं रेतः । इत्यादयः स्थिरा बहुकालावस्थायिनः पितृसमुद्भवा ज्ञेयाः भावा इति शेषः

शरीरोपचितिर्वर्णो वृद्धिस्तृप्तिर्बलं स्थितिः ।
अलोलुपत्वमुत्साह इत्यादीन्रसजान्विदुः ॥ १३ ॥
इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना ।
प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्येवमात्मजाः ॥ १४ ॥
ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा ।
रसनं घ्राणमित्याहुः पञ्च तेषां च गोचराः ॥ १५ ॥
शब्दः स्पर्शस्तथा रूपं रसो गन्ध इति क्रमात् ।
वाक्कराङ्घ्रिगुदोपस्थान्याहुः कर्मेन्द्रियाणि हि ॥ १६ ॥
वचनादानगमनविसर्गरतयः क्रमात् ।
कर्मेन्द्रियाणां जानीयान्मनश्चैवोभयात्मकम् ॥ १७ ॥

---

॥ १२ ॥ शरीरेति । उत्पत्तिकाले यत्स्थौल्यं सा शरीरस्योपचितिः । वर्णो गौरश्यामत्वादिः । वृद्धिः क्रमेणोपचयः । बलं सामर्थ्यं । स्थितिः अवयवदार्ढ्यम् । अलोलुपत्वं अकार्पण्यम् । उत्साह उद्योगः इत्यादीन्रसजान्धातुविशेषजान्विदुः। धातुविशेषविक्लवतायामुक्तकार्यसमुदायस्यापि वैक्लव्यं द्रष्टव्यम् ॥ १३ ॥ इच्छेति । इच्छाप्रभृतयो भावा आत्मजाः प्रारब्धकर्मजन्या नतु मातृपितृजन्या इत्यर्थः । द्वेषः प्रज्वलनात्मकः क्रोधः । सुखं अनुकूलवेदनीयम् । दुःखं प्रतिकूलवेदनीयम् । धर्मो विध्यपरपर्यायः । अधर्मो निषेधापरपर्यायः । भावना स्मृतिहेतुः संस्कारः । प्रयत्नः कृतिः भवितुर्भवनानुकूलो भावकव्यापारविशेष इति यावत् । ज्ञानमर्थप्रकाशः । आयुः प्राणधारणप्रयोजकीभूतः कालविशेषः । इन्द्रियाणि चक्षुरादीनि । एते भावाः स्वस्वकर्मानुसारिण इत्यर्थः ॥ १४ ॥ गोचरा विषयाः ॥ १५ ॥ तानेवाह— शब्द इति । कर्मेन्द्रियाण्याह—वागिति ॥ १६ ॥ वचनादयस्तेषां कर्मेन्द्रियाणां क्रियाः जानीयादिति व्यवहितेनान्वयः । मनोऽन्तःकरणवृत्तिः तदुभयात्मकं ज्ञानात्मकं कर्मात्मकं चेत्यर्थः ॥ १७ ॥

क्रियास्तेषां मनोबुद्धिरहंकारस्ततः परम्।
अन्तःकरणमित्याहुश्चित्तं चेति चतुष्टयम् ॥ १८ ॥
सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रियाः।
स्मृतिभीतिविकल्पाद्या बुद्धिः स्यान्निश्चयात्मिका।
अहं ममेत्यहंकारश्चित्तं चेतयते यतः ॥ १९ ॥
सत्वाख्यमन्तःकरणं गुणभेदात्त्रिधा मतम्।
सत्वं रजस्तम इति गुणाः सत्वात्तु सात्विकाः ॥ २० ॥
आस्तिक्यशुद्धिधर्मैकरुचिप्रभृतयो मताः।
रजसो राजसा भावाः कामक्रोधमदादयः ॥ २१ ॥

---

एकमन्तःकरणं वृत्तिभेदाच्चतुर्विधं मन इति, बुद्धिरिति, अहंकार इति, चित्तमिति च व्याख्यायत इत्यर्थः ॥ १८ ॥ एकस्यैवान्तःकरणस्यावस्थाचतुष्टयेन संज्ञाचतुष्टयमुक्तम्। नन्वन्तःकरणस्येन्द्रियत्वमनुपपन्नं असाधारणविषयाभावात्। नैयायिकादिभिर्मानसत्वेनाभ्युपगतानां सुखादीनामस्मत्सिद्धान्ते साक्षिमात्रभास्यत्वादित्याशङ्क्याह—सुखमिति। अन्तःकरणोपहितस्यैव साक्षितया साक्षिभास्येषु सुखादिषु चैतन्योपाधित्वमात्रेणान्तःकरणस्येन्द्रियत्वमुच्यते। अनेन ज्ञानेन्द्रियत्वमुक्तम्। स्मृतिभीतिप्रभृतयो मनसः क्रिया इत्यनेन कर्मेन्द्रियत्वं समर्थितम्। तथाच मनश्चैवोभयात्मकमित्युक्तं सुस्थम्। बुद्ध्यादीनां लक्षणान्याह—बुद्धिरिति। निश्चयात्मिका बुद्धिः। अहंममेत्यभिमानात्मकोऽहंकारः। यतः कारणादतीतानपि पदार्थांश्चेतयते स्मारयति तच्चित्तम्। मनसस्तु संकल्पादिकं लक्षणम्। तदुक्तम्—"मनोबुद्धिरहंकारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥"। विषयास्तत्तल्लक्षणानीत्यर्थः ॥ १९ ॥ सत्वाख्यमिति। अन्तःकरणे यत्तदेव सत्वाख्यम्। सत्वापरपर्यायकमित्यर्थः। तत्तु सत्वादिगुणभेदाद्भिद्यत इत्यर्थः। के ते गुणास्तत्राह—सत्वमिति ॥ २० ॥ उपादानीभूताविद्या गुणभेदा-

निद्रालस्यप्रमादादिवञ्चनाद्यास्तु तामसाः ।
प्रसन्नेन्द्रियतारोग्यानालस्याद्यास्तु सत्वजाः ॥ २२ ॥
देहो मात्रात्मकस्तस्मादादत्ते तद्गुणानिमान् ।
शब्दः श्रोत्रं मुखरता वैचित्र्यं सूक्ष्मता धृतिः ॥ २३ ॥
बलं च गगनाद्वायोः स्पर्शश्च स्पर्शनेन्द्रियम् ।
उत्क्षेपणमपक्षेपाकुञ्चने गमनं तथा ॥ २४ ॥
प्रसारणमितीमानि पञ्च कर्माणि रूक्षता ।
प्राणापानौ तथा व्यानसमानोदानसंज्ञकान् ॥ २५ ॥

---

दन्तःकरणमपि त्रिधेत्युक्तम् । तत्र सत्वात्सात्विकान्तःकरणात्के भावा जायन्त इत्याकाङ्क्षायामाह—आस्तिक्येति । अस्ति परलोक इत्येवं मतिरास्तिक्यम् । शुद्धिर्मनोनैर्मल्यं । धर्मे एका मुख्या रुचिः । प्रभृतिग्रहणाद्विवेकादयः । एते भावाः सात्विका मता इत्यर्थः । रजसो रजोबहुलान्मनसः कामक्रोधमदादयो राजसा भावाः आदिग्रहणेन लोभादीनां संग्रहः ॥ २१ ॥ निद्रेति । आलस्यमुद्योगराहित्यं प्रमादोऽनवधानता वञ्चना प्रतारणं एवमाद्यास्तामसा ज्ञेयाः । सिंहावलोकनेन पुनः सत्वजान्भावानाह—प्रसन्नेति । इन्द्रियाणां प्रसन्नानामरजस्तमोराहित्यमारोग्यं रोगाभावः । अनालस्यमुद्योगः । एवमाद्याः सत्वजाः ॥ २२ ॥ देह इति । देहः स्थूलदेहो मात्रात्मकः प्रमातृतादात्म्येनाध्यस्तः एतानेव प्रमातुर्गुणानादत्ते । अन्तःकरणस्य सत्वादिगुणोद्रेकानुसारेण स्थूलदेहेऽपि तथा कार्याणि भवन्तीत्यर्थः । कस्मात्कंकं धर्ममादत्त इत्येतदेव विवेचयति—शब्द इति । शब्दः श्रोत्रेन्द्रियं, मुखरता वक्तृत्वं । वैचित्र्यं कार्यकुशलता । सूक्ष्मता लाघवं धृतिर्धैर्यम् ॥ २३ ॥ बलं चेति सप्तगुणान्धर्मान्गगनात् स्थूलदेह आदत्त इति संबन्धः । वायोस्तु यानादत्ते तामाह—स्पर्शश्चेति । स्पर्शः स्पर्शनेन्द्रियं त्वक् उत्क्षेपणादीनि पञ्च कर्माणि ॥ २४ ॥ रूक्षता कर्कशत्वम् । प्राणादि दश विकृतीः लाघवं चेति एकोनविंशतिधर्मानादत्त इति ।

नागं कूर्मं च कृकलं देवदत्तं धनंजयम् ।
दशैता वायुविकृतीस्तथा गृह्णाति लाघवम् ॥ २६ ॥
तेषां मुख्यतरः प्राणो नाभेः कण्ठादवस्थितः ।
चरत्यसौ नासिकयोर्नाभौ हृदयपङ्कजे ॥ २७ ॥
शब्दोच्चारणनिश्वासोच्छ्वासादेरपि कारणम् ॥ २८ ॥
अपानस्तु गुदे मेण्ढ्रे कटिजङ्घोदरेष्वपि ।
नाभिकण्ठे वङ्क्षणयोरूरुजानुषु तिष्ठति ।
तस्य मूत्रपुरीषादिविसर्गः कर्म कीर्तितम् ॥ २९ ॥
व्यानोऽक्षिश्रोत्रगुल्फेषु जिह्वा घ्राणेषु तिष्ठति ।
प्राणायामधृतित्यागग्रहणाद्यस्य कर्म च ॥ ३० ॥
समानो व्याप्य निखिलं शरीरं वह्निना सह ।
द्विःसप्ततिसहस्रेषु नाडीरन्ध्रेषु संचरन् ॥ ३१ ॥

---

यद्यप्याकाशकार्यमध्ये लाघवं परिगणितमिति चेदुभयकार्यत्वान्न विरोधः ॥ २५ ॥ २६ ॥ प्राणादीनां दशानां वायुविशेषाणां स्थानानि कार्याणि चाह—तेषामित्यादिभिः श्लोकैः । तेषां पूर्वोक्तवायुकार्याणां मध्ये प्राणो मुख्यतरः । सच नाभेः कण्ठात् नाभिं कण्ठं च व्याप्यावस्थितः । "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी । असौ नासिकयोर्नासारन्ध्रयोर्नाभ्यादौ हृदयपङ्कजे च चरति ॥२७॥ शब्दोचारणादिकारणं च प्राण इत्यनुवर्तते ॥ २८ ॥ अपानस्त्विति । गुदादिषु पञ्चसु नाभिकण्ठादिषु चतुर्षु च । तत्र वङ्क्षणशब्द ऊरुशब्दवाचकः । स्थानेषु अपानस्तिष्ठतीत्यन्वयः ॥ २९ ॥ व्यानस्य स्थानकर्मणी आह—व्यान इति । अक्ष्यादिषु पञ्चस्थानेषु तिष्ठति । प्राणायामः प्राणनिरोधः तत्र धृतिः कुम्भक इति यावत्, त्यागो रेचकः, ग्रहणं पूरक इत्यादि अस्य व्यानस्य कर्मेत्यर्थः ॥३०॥ ननु "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदे-

भुक्तपीतरसान्सम्यगानयन्देहपुष्टिकृत् ।
उदानः पादयोरास्ते हस्तयोरङ्गसन्धिषु ॥ ३२ ॥
कर्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्तितम् ।
त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ॥ ३३ ॥
उद्गारादि निमेषादि क्षुत्पिपासादिकं क्रमात् ।
तन्द्री प्रकृतिशोकादि तेषां कर्म प्रकीर्तितम् ॥ ३४ ॥
अग्नेस्तु रोचकं रूपं दीप्तं पाकं प्रकाशताम् ।
अमर्षतीक्ष्णसूक्ष्माणामोजस्तेजस्तु शूरताम् ॥ ३५ ॥

---

शस्थो व्यानः सर्वशरीरगः ॥" इति प्राञ्चोक्तम् । अत्र समानस्य सर्वशरीरव्यापित्वमुक्तमिति परस्परं स्मृत्योर्विरोधः प्राप्तस्तत्र का व्यवस्थितिरिति चेदुच्यते । सर्वशरीरव्यापकेन व्यानेव महाभेद उक्त इति गृहाण । समान इति ॥ ३१ ॥ समानशब्दार्थमाह—भुक्तेति । भुक्तस्य चतुर्विधान्नस्य पीतस्य जलादेः रसान् सम्यक् तत्तदवयवेष्वानयन् देहपुष्टिं करोतीति समान इत्यर्थः । उदानस्थानमाह—पादयोरिति । संधिषु कण्ठादिषु ॥ ३२ ॥ अस्य कर्माह—कर्मास्येति । देहस्य उन्नयनमुत्थापनमुत्क्रान्तिश्च एवमादि । उपवायुस्थानमाह—त्वगादीति ॥ ३३ ॥ त्वङ्मांसशोणितास्थिमज्जास्नायुषु संहत्य स्थितानां नागादीनां कर्माण्याह—उद्गारादीति । उद्गारहिक्कावान्त्यादि नागस्य । निमेषोन्मेषकटाक्षादि कूर्मस्य । क्षुत्पिपासाक्षुतादि कृकलस्य । आलस्यनिद्राजृम्भणादि देवदत्तस्य । प्रकृत्या शोकहासादि धनंजयस्य कर्म क्रमात्प्रकीर्तितम् ॥ ३४ ॥ तेजःकार्यमाह—अग्नेस्त्विति । अग्नेः रोचकप्रभृतीन्धर्मानादत्त इति पूर्ववदन्वयः । रोचयति प्रकाशयति घटादीनिति रोचकं चक्षुः । रूपं श्यामिकादि । दीप्तं शुक्लरूपम् । पाकं भुक्तस्य पचनम् । प्रकाशयतीति प्रकाशता स्फूर्तिः । अमर्षः कोपः । तीक्ष्णं तीक्ष्णत्वं परिभवासहिष्णुत्वम् ।

मेधावितां तथा दत्ते जलात्तु रसनं रसम्।
शैत्यं स्नेहं द्रवं स्वेदं गात्रादिमृदुतामपि ॥ ३६ ॥
भूमेर्घ्राणेन्द्रियं गन्धं स्थैर्यं धैर्यं च गौरवम्।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ ३७ ॥
अन्नं पुंसाशितं त्रेधा जायते जठराग्निना।
मलं स्थविष्ठो भागः स्यान्मध्यमो मांसतां व्रजेत्।
मनः कनिष्ठो भागः स्यात्तस्मादन्नमयं मनः ॥ ३८ ॥
अपां स्थविष्ठो मूत्रं स्यान्मध्यमो रुधिरं भवेत्।
कनिष्ठभागः प्राणः स्यात्तस्मात्प्राणो जलात्मकः ॥ ३९ ॥

---

सूक्ष्मं सूक्ष्मत्वं कार्श्यमित्यर्थः। भावप्रधानो निर्देशः। कारकशेषे षष्ठी न माषाणामश्नीयादितिवत्। ओजः शरीरस्थितिप्रयोजकस्तेजोविशेषः। तेजः संतापः। शूरता पराक्रमः ॥३५॥ मेधावितां धारणावत्त्वम्। एतान्धर्मान्। जलात्तु रसनादीनादत्त इत्यन्वयः। रसनमिन्द्रियं रसं षड्विधं शैत्यं स्नेहं चिक्कणताम् द्रवं मुखादौ लालादि। स्वेदं घर्मं शरीरस्य। आदिशब्दात्करचरणाद्यवयवानां मृदुतां कोमलताम् ॥ ३६ ॥ भूमिसंबन्धिनं भावमाह—भूमेरिति। गौरवं गरिमाणम्। प्रसङ्गाच्छरीरधारकान्सप्तधातूनाह—त्वगिति। उक्तार्थः ॥ ३७ ॥ प्रसङ्गाद्भुक्तान्नादेः परिणामभेदमाह—अन्नमिति। पुंसाम्। उपलक्षणमेतत्पश्वादीनामपि। अशितं भक्षितं जठराग्निना पच्यमानं त्रेधा जायते। तत्र स्थविष्ठः स्थूलो भागः मलं पुरीषं स्यात्। मध्यमो भागः मांसतां व्रजेत्। कनिष्ठो मनः स्यात्। "अन्नमयं हि सौम्य मनः" इति श्रुतेः। मनसः पञ्चभूतकार्यत्वेऽपि अन्नस्य तदुद्बलकत्वादन्नमयमित्युच्यते। एवं "आपोमयः प्राणस्ते-

तेजसोऽस्थि स्थविष्ठः स्यान्मज्जामध्यसमुद्भवः ।
कनिष्ठा वाङ्मता तस्मात्तेजोऽबन्नात्मकं जगत् ॥ ४० ॥
लोहिताज्जायते मांसं मेदो मांससमुद्भवम् ।
मेदसोऽस्थीनि जायन्ते मज्जा वास्थिसमुद्भवः ॥ ४१ ॥
नाड्योऽपि मांससंघाताच्छुक्रं मज्जासमुद्भवम् ॥ ४२ ॥
वातपित्तकफाश्चात्र धातवः परिकीर्तिताः ।
दशाञ्जलि जलं ज्ञेयं रसस्याञ्जलयो नव ॥ ४३ ॥
रक्तस्याष्टौ पुरीषस्य सप्त हि श्लेष्मणश्च षट् ।
पित्तस्य पञ्चचत्वारो मूत्रस्याञ्जलयस्त्रयः ॥ ४४ ॥

---

जोमयी वाक्" इत्यत्रापि ज्ञेयम् ॥ ३८ ॥ ३९ ॥ तेजस इति । तेजसः घृतादेः अशितस्य मज्जामध्यान्मध्यमभागात् समुद्भवो यस्य स तथा । "कनिष्ठभागात् वाग्भवति" इति श्रुतेर्ज्ञेयः । तथाच श्रुतिः "अन्नमशितं त्रेधा भवति यः स्थविष्ठो धातुस्तत्पुरीषम्" इत्याद्युपक्रम्य जलभागानुक्त्वा तेजोभागद्वयानन्तरं "यः कनिष्ठः स वाक्" इति । स्पष्टमन्यत् ॥ ४० ॥ ४१ ॥ ४२ ॥ इदानीं शरीरस्थानां केषांचिद्रसानां परिणाम उच्यते । यद्यपि पूर्वोक्तानां वक्ष्यमाणानां च विकाराणां ज्ञानं न मोक्षसाधनं तथापि वैराग्यहेतुत्वादुक्तं भगवता शिवेन । यदध्यासेन प्राणिनो मुह्यन्ति तस्य शरीरस्यैतादृशी गतिरिति भावः । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्" इति श्रुत्या वैराग्यस्याभ्यर्हितत्वेन प्रतिपादनात् । वातेति । एतेपि शरीरे धातवः सन्ति । यथा पञ्चीकरणप्रक्रिया शास्त्रकारैरुक्ता तथेदमञ्जलिपरिमाणमपि तैरेव व्यवस्थापितमायुर्वेदादाविति नात्र शङ्का विधेया । तदुक्तम् "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति । दशेति । तत्परिमाणकमित्यर्थः । सम्यक्परिणतस्याहा-

वसाया मेदसो द्वौ तु मज्जा त्वञ्जलिसंमितः।
अर्धाञ्जलि तथा शुक्रं तदेव बलमुच्यते ॥ ४५ ॥
अस्थ्नां शरीरे संख्या स्यात्षष्टियुक्तं शतत्रयम्।
जलजानि कपालानि रुचकास्तरणानि च।
नलकानीति तान्याहुः पञ्चधास्थीनि सूरयः ॥ ४६ ॥
द्वे शते त्वस्थिसंधीनां स्यातां तत्र दशोत्तरे।
रौरवाः प्रसराः स्कन्धसेचनाः स्युरुलूखलाः ॥ ४७ ॥
समुद्गा मण्डलाः शङ्खावर्ता वामनकुण्डलाः।
इत्यष्टधा समुद्दिष्टाः शरीरेष्वस्थिसंधयः ॥ ४८ ॥
सार्धकोटित्रयं रोम्णां श्मश्रुकेशास्त्रिलक्षकाः।
देहस्वरूपमेवं ते प्रोक्तं दशरथात्मज।
यस्मादसारो नास्त्येव पदार्थो भुवनत्रये ॥ ४९ ॥
देहेऽस्मिन्नभिमानेन न महोपायबुद्धयः।
अहंकारेण पापेन क्रियन्ते हन्त सांप्रतम् ॥ ५० ॥

---

रस्य सारो रसस्तस्य ॥ ४३ ॥ ४४ ॥ वसाया मांसस्नेहस्य मेदसो मांसविशेषस्य च द्वौ द्वावञ्जली मज्जा तु अञ्जलिपरिमितः। शुक्रं वीर्यं अर्धाञ्जलि, तदेव बलप्रदत्वाद्बलमुच्यते ॥४५॥ अस्थ्नां प्रमाणं तु षष्टियुक्तं शतत्रयं बोद्धव्यम्। अस्थीनि पञ्चधा, जलजः शङ्खः तदाकारत्वाज्जलजानि भ्रूकर्णदेशस्थितानि ज्ञेयानि। कपालानि शिरःसंबन्धीनि एवमवशिष्टानां निरुक्तिराकरेऽस्ति साऽनतिप्रयोजनत्वान्नेह लिख्यते ॥ ४६ ॥ ४७ ॥ ४८ ॥ रोम्णां सार्धकोटित्रयं श्मश्रूणि शिरःकेशाश्च मिलित्वा त्रिलक्षकाः। एवं देहस्य स्वरूपं ते तुभ्यं प्रोक्तम्। हे दाशरथे, यस्माद्देहरूपादसारः पदार्थो भुवनत्रयेऽपि नास्ति ॥ ४९ ॥ देहेऽस्मिन्निति। अस्मिन्नुक्तस्वरूपे देहे अहंकारेण कर्त्रा पापेन हेतुना मह उत्सवः। "मह उद्धव उत्सवः"

तस्मादेतत्स्वरूपं तु विबोद्धव्यं मनीषिणा ॥ ५१ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे शारीरनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः १०

श्रीराम उवाच।

भगवन्नत्र जीवोऽसौ जन्तोर्देहेऽवतिष्ठते।
जायते वा कुतो जीवः स्वरूपं वास्य किं वद ॥ १ ॥
देहान्ते वा कुत्र याति गत्वा वा कुत्र तिष्ठति।
कथमायाति वा देहं पुनर्नायाति वा वद ॥ २ ॥

---

इत्यमरः। अत्र मोक्ष एव उत्सवो मुख्य इतरेषां क्षयिष्णुत्वात्। भाक्तमुत्सवत्वं तस्य उपायो मोक्षोपाय इत्यर्थः। तस्मिन्बुद्ध्योऽविचारान्न क्रियन्ते। हन्त खेदे ॥ ५० ॥ तस्मादेतस्याहंकारास्पदस्य स्वरूपमुक्तलक्षणं मनीषिणावश्यं बोद्धव्यं विरक्तिदार्ढ्यायेति भावः ॥ ५१ ॥ इति शिवगीताटीकायां नवमोऽध्यायः ॥ ९ ॥

एवमुक्तप्रकारेण देहस्वरूपं विज्ञाय जीवस्वरूपं विविदिषू राम उवाच—भगवन्निति। हे भगवन्नचिन्त्यमहाभिभूते, अस्मिन् जन्तोर्देहेऽसौ परोक्षो जीवः किमवतिष्ठते जायते वा। किंच। कुतः कारणाज्जीव इत्युच्यते। जीवत्वं किं स्वाभाविकमाविद्यकं वेति भावः। अस्य जीवस्य स्वरूपं वा किं चिदात्मकं तद्विलक्षणं वेत्यर्थः। एतद्वद ॥ १ ॥ देहान्ते च कुत्र गच्छति कुत्र च तिष्ठति। पुनर्देहं कथमायाति यदि वा पुनर्देहं नायाति तदपि वद। अत्र सर्वेषु पक्षेषु

श्रीभगवानुवाच ।

साधु पृष्टं महाभाग गुह्याद्गुह्यतमं हि यत् ।
देवैरपि सुदुर्ज्ञेयमिन्द्राद्यैर्वा महर्षिभिः ॥ ३ ॥
अन्यस्मै नैव वक्तव्यं मयापि रघुनन्दन ।
त्वद्भक्त्याहं परं प्रीतो वक्ष्याम्यवहितः शृणु ॥ ४ ॥
सत्यज्ञानात्मकोऽनन्तः परमानन्दविग्रहः ।
परमात्मा परं ज्योतिरव्यक्तो व्यक्तकारणम् ॥ ५ ॥
नित्यो विशुद्धः सर्वात्मा निर्लेपोऽहं निरञ्जनः ।
सर्वधर्मविहीनश्च न ग्राह्यो मनसापि च ॥ ६ ॥
नाहं सर्वेन्द्रियग्राह्यः सर्वेषां ग्राहको ह्यहम् ।
ज्ञाताहं सर्वलोकस्य मम ज्ञाता न विद्यते ॥ ७ ॥
दूरः सर्वविकाराणां परमाण्वादिकस्य च ॥ ८ ॥

---

दूषणसद्भावः । संशयबीजं विना संशयप्रश्नानुत्थानात् ॥ २ ॥ एवं पृष्टो भगवानुवाच—साध्विति । त्वदुक्तसर्वपक्षेषु बाधकसंभवाद्गुरूपदेशेन विना दुर्ज्ञेयत्वात्साधु पृष्टमिति भावः । इदं तत्त्वं गहनमित्याह—गुह्यादिति ॥ ३ ॥ ४ ॥ प्रतिबिम्बस्य जीवस्य स्वरूपं विवक्षुरादौ बिम्बस्वरूपमाह सार्धश्लोकेन वाक्येन—सत्येत्यादिना । अव्यक्तः अविद्यावृतजीवानां, गूढः अव्यक्तस्य मायायाः कारणं भासकः ॥ ५ ॥ निर्लेपो निःसङ्ग उपचयशून्यो वा, निरञ्जनः क्रियारहितः । 'लिप उपदेहे' उपदेहो वृद्धिः । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । इति धातुद्वयादुक्तार्थो वेदितव्यः ॥ ६ ॥ न चैवं सर्वप्रत्ययवेद्यं ब्रह्मेति वार्तिककृतोक्तं विरुध्येतेति वाच्यम् । प्रपञ्चतादात्म्यापन्नस्य सर्वप्रत्ययवेद्यत्वेऽपि शुद्धस्योपनिषदेकगम्यत्वात् ॥ ७ ॥ दूर इति सर्वविकाररहितः । अनेन परिणामवादो निरस्तः । परमाण्वाधिकस्येत्यनेनारम्भवादोऽपि निरस्तः । विवर्तवादस्तु पूर्वाध्याये स्फु-

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ॥ ९ ॥
यस्तु सर्वाणि भूतानि मय्येवेति प्रपश्यति।
मां च सर्वेषु भूतेषु ततो न विजुगुप्सते ॥ १० ॥
यस्य सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः।
को मोहस्तत्र कः शोक एकत्वमनुपश्यतः ॥ ११ ॥
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥
अनाद्यविद्यया युक्तस्तथाप्येकोऽहमव्ययः।
अव्याकृतब्रह्मरूपो जगत्कर्ता महेश्वरः ॥ १३ ॥

---

टमभ्युपगतः ॥ ८ ॥ यतो वाच इति षष्ठाध्याये व्याख्यातम् ॥ ९ ॥ यस्त्विति। मय्यध्यस्तानीति मां च तेष्वनुस्यूतं पश्यति। ततोऽनन्तरं न विजुगुप्सते ब्रह्मात्मनैव सर्वग्रहणान्न किंचिदपि निन्दतीत्यर्थः ॥ १० ॥ यस्येति। आत्मैव सत्यः सर्वमन्यन्मिथ्येति बोधाय सामानाधिकरण्यभूतशोकमोहयोर्भेदः सापेक्षत्वात् ॥ ११ ॥ ननु तर्हि सर्वे कुतो वा त्वामात्मत्वेन न पश्यन्तीत्याशङ्क्य श्रुत्या परिहरति 'यत्साक्षादपरोक्षाद्ब्रह्म' इति प्रत्यक्षसिद्धोऽपि मूढानां गूढ आत्मा न प्रकाशते यथोलूकस्य जगत्प्रकाशकः सविता तद्वत्। तर्हि कैः प्रत्यक्षीक्रियत इत्यत आह। अग्र्यया श्रवणादिसाधनसंस्कृतया बुद्ध्या सूक्ष्मदर्शिभिः सूक्ष्मं ब्रह्म द्रष्टुं शीलं येषां तैर्दृश्यते आत्मत्वेनापरोक्षीक्रियते न त्वन्यैः बहिर्मुखैरित्यर्थः। गूढोत्मेति पृषोदरादित्वात्साधुत्वम् ॥ १२ ॥ नन्वद्वितीयश्चेत्त्वं कथं तर्हि जगदुत्पत्तिस्त्वत्तः स्यात्परिणामिनोऽन्यस्य विरहादित्याशङ्क्याह—अनादीति। यद्यप्येकोऽहं सजातीयविजातीयस्वगतभेदशून्यः अव्ययो निर्विकारस्तथापि अनाद्यविद्यया युक्तः सन् अव्याकृतं नामतो रूप-

ज्ञानमात्रे यथा दृश्यमिदं स्वप्ने जगत्त्रयम्।
तद्वन्मयि जगत्सर्वं दृश्यतेऽस्ति विलीयते॥ १४॥
नानाविद्यासमायुक्तो जीवत्वेन वसाम्यहम्।
पञ्च कर्मेन्द्रियाण्येव पञ्च ज्ञानेन्द्रियाणि च।
मनो बुद्धिरहंकारश्चित्तं चेति चतुष्टयम्॥ १५॥
वायवः पञ्च मिलिता यान्ति लिङ्गशरीरताम्॥ १६॥

---

तश्चानभिव्यक्तं अविद्याशबलं ब्रह्म तत्स्वरूपो भूत्वा जगत्कर्तास्मीति शेषः॥ १३॥ ज्ञानमात्र इति। यथा स्वप्ने इदं जगत्त्रयं अविद्यया साक्षिणि ज्ञानमात्रे कल्प्यते, तद्वन्मयीदं सर्वं जगद्दृश्यतेऽस्ति विलीयते च। तथाच जाग्रत्प्रपञ्चो मिथ्या दृश्यत्वात्स्वप्नवदित्यनुमानमपि श्रुत्युक्तमुपष्टम्भकं ज्ञेयम्। "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इत्यादिश्रुतयः प्रमाणम्॥ १४॥ नन्वेतावता प्रबन्धेन परमात्मस्वरूपे निरूपितेऽपि मायोपक्रान्तेषु जीवविषयकेषु प्रश्नेषूत्तरं न लब्धमेवेत्याशङ्क्याह—नानेति। अहमेव प्रपञ्चे जीवत्वेन वसामीति संबन्धः। अनेन जीवस्य स्वरूपं कीदृशमिति प्रश्ने सच्चिदात्मकमित्युत्तरं सूचितम्। किंच उत्पद्यते नवेति प्रश्ने नोत्पद्यत इत्यपि सूचितम्। मत्स्वरूपत्वेनानाद्यनन्तत्वात्। नानाविद्यासमायुक्त इत्यनेन मूलाविद्यावच्छिन्नानामनेकेषां जीवानामेकमुक्तौ न सर्वमुक्तिरिति सूचितम्। अविद्याशब्देनावरणं सूचयता मुक्तसंसारिणोर्विशेषोऽप्युपपादितः। मुक्तस्यानावृतत्वात्। कृतानां प्रश्नानां मध्ये जीवस्य लोकान्तरगमनागमनादिप्रश्नद्वयमवशिष्टं तदपि लिङ्गशरीरोपहितस्य नानुपपन्नमिति प्रतिपादयन् लिङ्गशरीरमाह—पञ्चेति। इदमेवाचार्याः संजगृहुः—"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥" इति अन्तःकरणेन सह षोडशकलं लिङ्गं तद्भवति भेदे गृहीतेऽपि न विरोधः॥ १५॥ १६॥

तत्राविद्यासमायुक्तं चैतन्यं प्रतिबिम्बितम् ।
व्यावहारिकजीवस्तु क्षेत्रज्ञः पुरुषोऽपि वा ॥ १७ ॥
स एव जगतां भोक्ता नाद्ययोः पुण्यपापयोः ।
इहामुत्र गती तत्र जाग्रत्स्वप्नादिभोक्तृता ॥ १८ ॥
यथा दर्पणकालिम्ना मलिनं दृश्यते मुखम् ।
तद्वदन्तःकरणगैर्दोषैरात्मापि दृश्यते ॥ १९ ॥
परस्पराध्यासवशात्स्यादन्तःकरणात्मनोः ।
एकीभावाभिमानेन परात्मा दुःखभागिव ॥ २० ॥

---

तत्रेति । तत्र लिङ्गशरीरे अविद्यया समायुक्तं तदवच्छिन्नमीश्वरचैतन्यं प्रतिबिम्बितं सत् व्यावहारिको व्यवहारक्षमो जीवः क्षेत्रज्ञः पुरुषशब्दवाच्योऽपि भवतीति शेषः ॥ १७ ॥ स एवेति । न आद्येऽनाद्ये तयोः प्रवाहरूपेणानादिरूपयोः पुण्यपापादृष्टयोः । कार्यभूतानां जगतां जगच्छब्दोपलक्षितस्थावरजंगमशरीरायतनानां भोगानामित्यर्थः । भोक्ता तत्र लिङ्गदेहे निमित्तभूते सतीत्यर्थः । इहामुत्रगती भवतः जीवस्येति शेषः । जाग्रत्स्वप्नादिभोक्तृता च भवति । जीवस्य भोक्तृत्वमौपाधिकमेव न वास्तवमिति भावः । तदुक्तम् "आत्मा कर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हि मुक्तताम् । नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥" इति ॥ १८॥ तदेव दृष्टान्तेनोपपादयति—यथेति । यथा दर्पणस्य कालिम्ना श्यामत्वेन तद्गतं मुखं मलिनं दृश्यते, तद्वदन्तःकरणगैर्दोषैः कामक्रोधादिभिरात्मा जीवोऽपि मलिनो दृश्यते ॥ १९ ॥ परस्परेति । अन्योन्यतादात्म्याध्यासवशात् अन्तःकरणं च आत्मा जीवश्च तयोरेकीभावेन तद्रूपेणाभिमानेनेत्यर्थः । परमात्मा निःसङ्गोऽपि दुःखभागिव स्यात् । नतु दुःखभाक् दुःखस्य विषयसत्ताकत्वादिति भावः ॥ २० ॥

अधोमुखं च तत्रास्ति सूक्ष्मं सुषिरमुत्तमम् ।
दहराकाशमित्युक्तं तत्र जीवोऽवतिष्ठते ॥ २५ ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ २६ ॥
कदम्बकुसुमोद्बुद्धकेशरा इव सर्वतः ।
प्रसृता हृदयान्नाड्यो याभिर्व्याप्तं शरीरकम् ॥ २७ ॥

---

वायुस्वरूपं तिष्ठति तस्य वायुसंचारस्थलस्य मध्ये हृदयं तिष्ठति । सनालं पद्मकोशवत् तत्संनिभमित्यर्थः ॥ २४ ॥ अधोमुखमिति । हृदयविशेषणम् । तत्र तस्मिन्हृदयपद्मे सूक्ष्मं सुषिरं छिद्रमुत्तमं जीवाधिष्ठानत्वात् अस्ति तद्दहराकाशमित्युक्तं श्रुतिभिः स्मृतिभिश्चेति शेषः । छान्दोग्यस्याष्टमाध्याये—"अथ यदस्मिन्ब्रह्मपुरे दहरं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं" इति प्रतिपादितम् । उक्तं चाभियुक्तैः "उपलब्धेरधिष्ठानं ब्रह्मणो देह उच्यते । तेन साधारणत्वेन देहो ब्रह्म परं भवेत् ॥" इति । "दहर उत्तरेभ्यः" इत्यधिकरणे ब्रह्मैव दहराकाश इति निर्णीतं तत्र जीवोऽवतिष्ठत इत्यनेन जीवब्रह्मणोरभेद एव परमार्थत इति भावः सूचितः ॥ २५ ॥ वालाग्रेति । वालाग्रं केशाग्रं तस्य शतभागः शततमांशः सोऽपि शतधा कल्प्यः । तस्यापि यो भागः स जीवो विज्ञेयः उपाधिवशाद्य इति सूक्ष्म इत्यर्थः । वास्तवं तु जीवस्वरूपमाह—सचेति । आनन्त्याय परिच्छेदविरहाय समर्थो भवति । उपाध्यपगमे सतीति भावः ॥ २६ ॥ अथ जीवब्रह्मैक्य-द्रुपासकानां मूर्धन्यया नाड्या उत्क्रमणपूर्विकां क्रममुक्तिं कथयितुं नाडीस्तावत्प्रपञ्चयति—कदम्बेति । तथाच श्रुतिः "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । यद्यपि द्वासप्ततिस-

हितं बलं प्रयच्छन्ति तस्मात्तेन हिताः स्मृताः।
द्वासप्ततिसहस्रैस्ताः संख्याता योगवित्तमैः॥ २८॥
हृदयात्तास्तु निष्क्रान्ता यथार्कार्द्रश्मयस्तथा।
एकोत्तरशतं तास्तु मुख्या विष्वग्विनिर्गताः॥ २९॥
वहन्त्यम्भो यथा नद्यो नाड्यः कर्मफलं तथा।
अनन्तैकोर्ध्वगा नाडी मूर्धपर्यन्तमञ्जसा॥ ३०॥
प्रतीन्द्रियं दशदश निर्गता विषयोन्मुखाः।
नाड्यः शर्मादिहेतुत्वात्स्वप्नादिफलभुक्तये॥ ३१॥

---

हृत्संख्याकानां नाडीनां कदम्बो नाभौ तिष्ठति तथापि हृदयसंबन्धोऽप्यस्तीति हृदयादित्युक्तम्। याभिर्नाडीभिः शरीरकं व्याप्तम्॥ २७॥ हितमिति। हितशब्दस्य विवरणं बलमिति। यस्मात्कारणात्प्रयच्छन्ति तेन कारणेन हिताः स्मृताः। हिता नाम हृदयस्य नाड्य इति श्रुतिसिद्धैषा संज्ञा। तासां संख्यामाह—द्वासप्ततिसहस्रैरिति॥ २८॥ हृदयादिति। दृष्टान्तमाह—यथेति। तासु पूर्वोक्तसंख्यावतीषु नाडीषु एकाधिकशतं मुख्याः विष्वक्सर्वतः विनिर्गताः प्रसृताः॥ २९॥ वहन्तीति। यथा नद्योऽम्भ उदकं वहन्ति तथा नाड्यः कर्मफलं सुखदुःखादि वहन्ति तास्वेकोत्तरशतसंख्याकासु एका सुषुम्नाख्या अञ्जसा आञ्जस्येन। आर्जवेनेति यावत्। मूर्धपर्यन्तं ऊर्ध्वं गच्छतीति ऊर्ध्वगा अनन्तफलत्वाच्चानन्ता सैवोच्यते॥३०॥ अनन्तफलत्वमेव प्रतिपादयितुं इतरासां फलं तावदाह—प्रतीन्द्रियमिति। ज्ञानकर्मेन्द्रियाणि मिलित्वा दश प्रतीन्द्रियं दशदश निर्गताः तत्तदिन्द्रियविषयाः शब्दादयो ज्ञानेन्द्रियाणां वचनादयः कर्मेन्द्रियाणां तान्प्रत्यभिमुखाः। शर्म सुखं आदिपदाद्दुःखं च तयोर्हेतुत्वात्। स्वप्नहेतुत्वाच्च यथायथं जाग्रदादिसुखादिसाक्षात्कारायोपयु-

सुषुम्नेति समादिष्टा तया गच्छन्विमुच्यते ।
तयोपचितचैतन्यं जीवात्मानं विदुर्बुधाः ॥ ३२ ॥
यथा राहुरदृश्योऽपि दृश्यते चन्द्रमण्डले ।
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहेऽपि दृश्यते ॥ ३३ ॥
दृश्यमाने यथा कुम्भे घटाकाशोऽपि दृश्यते ।
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहेऽपि दृश्यते ॥ ३४ ॥
निश्चलः परिपूर्णोऽपि गच्छतीत्युपचर्यते ।
जाग्रत्काले यथा ज्ञेयमभिव्यक्तविशेषधीः ॥ ३५ ॥

---

ज्यन्त इति फलितोऽर्थः ॥ ३१ ॥ सुषुम्नायाः फलमाह—सुषुम्नेति । समादिष्टा सम्यगुक्ता श्रुतिभिरिति शेषः । तया गच्छन् मुच्यते मुक्तो भवति । हि प्रसिद्धौ । ननु सुषुम्नाया निर्गमनेन मोक्षश्चेत्तर्हि 'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतिस्मृतिव्याकोपः प्रसज्येतेत्याशङ्क्याह—तयेति । उपचितं कामादिदोषविरहेणोपासाबलविशिष्टं सत् आविर्भूतमित्यर्थः । चैतन्यं जीवात्मानं बुधा विदुः नतु जीवदशानिवृत्तेति भावः । तथा चोपासकस्य सुषुम्नया गच्छतः पुरुषस्य ब्रह्मलोकावाप्तिरूपा गौणी मुक्तिरेव न परमा मुक्तिरिति नोक्तश्रुतिस्मृतिव्याकोप इति भावः । ब्रह्मलोक इव निर्गुणसाक्षात्कारेऽपि परमा मुक्तिर्भवति ॥३२॥ जीवस्य सर्वगतस्यापि लिङ्गशरीर एवाभिव्यक्तिर्नान्यत्रेति सदृष्टान्तमाह—यथा राहुरिति । अभिव्यक्तिविषयक एव दृष्टान्तो ग्राह्यः नहि दृष्टान्ते सर्वं साम्यमिति न्यायात् ॥३३॥३४॥ तस्य जीवस्य व्यापकत्वेऽपि लिङ्गदेहावच्छेदेनैव प्रमातृत्वमित्युपपादयन्नाह—निश्चल इति । निश्चलः निष्क्रियः । तत्र हेतुः परिपूर्णः एतादृशोऽपि गच्छतीत्युपचर्यते । ज्ञेयं घटादिकमनतिक्रम्य । यथाज्ञेयं घटाद्याकारान्तःकरणवृत्ति तथा अभिव्यक्ता निवृत्तावरणा या विशेषधीर्घटाद्युपहितचैतन्यं यस्य तथाभूतः सन् जाग्रत्काले सर्वा-

व्याप्नोति निष्क्रियः सर्वान् भानुर्दश दिशो यथा ।
नाडीभिर्वृत्तयो यान्ति लिङ्गदेहसमुद्भवाः ॥ ३६ ॥
तत्तत्कर्मानुसारेण जाग्रद्भोगोपलब्धये ।
इदं लिङ्गशरीराख्यमामोक्षं न विनश्यति ॥ ३७ ॥
आत्मज्ञानेन नष्टेऽस्मिन्साविद्ये स्वशरीरके ।
आत्मस्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥ ३८ ॥
उत्पादिते घटे यद्वद्घटाकाशत्वमृच्छति ।
घटे नष्टे यथाकाशं स्वरूपेणावतिष्ठते ॥ ३९ ॥

---

न्बाह्यपदार्थान्व्याप्नोति । इयमत्र प्रक्रिया । त्रिविधं चैतन्यं प्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यं चेति । यदा समानकाले समानदेशे वृत्त्यवच्छिन्नं चैतन्यं इन्द्रियद्वारा विषयं प्रति गत्वा तं विषयं व्याप्नोति चैतन्यत्रयमेकं भवति तदा घटादिपदार्थज्ञानं भवति । त्रयाणामन्तःकरणतद्वृत्तिघटाद्युपाधीनामेकदेशस्थत्वे सत्येककालीनत्वे सत्युपाधेयाभेदप्रयोजकत्वनियमात् । अतएव पर्वतं पश्यामि, वह्निमनुमिनोमीत्यनुव्यवसायः । वृत्त्यवच्छिन्नचैतन्यवह्न्यवच्छिन्नचैतन्ययोः संबन्धाभावात् प्रमातृचैतन्यविषयचैतन्याभिन्नत्वमेव प्रत्यक्षत्वमित्यन्यत्र विस्तरः ॥ ३५ ॥ लिङ्गदेहसमुद्भवा वृत्तयो नाडीभिर्द्वाररूपाभिर्बहिर्यान्ति । विषयं व्याप्यैव प्रकाशयन्तीत्यर्थः । स्वप्ने तु विषया रथाद्य इन्द्रियवृत्तयः सर्वं प्रातिभासिकमेवेति व्यवस्थापितमाकरे ॥ ३६ ॥ तत्तदिति । तेषां तेषां मातृणां यानि प्रारब्धकर्माणि तेषामनुसारेणानुकूल्येन तत्प्रमातॄणां जाग्रद्दशायां मे भोगाः सुखदुःखसाक्षात्कारास्तेषामुपलब्धये ज्ञानाय प्राप्तये वा । यस्यैता वृत्तयः कथितास्तदिदं लिङ्गशरीरं आमोक्षं मोक्षं मर्यादिकृत्य न विनश्यति । मोक्षे तु विनश्यतीति भावः ॥ ३७ ॥ आत्मेति । ऐक्यज्ञानेनेत्यर्थः । आत्मस्वरूपेण सच्चिदानन्दस्वरूपेणावस्थानं मुक्तिरित्यभिधीयते ॥ ३८ ॥ उत्पादित इति । पूर्णमाकाशं घटे उत्पन्ने सति घटाकाशत्वमृच्छति

जाग्रत्कर्मक्षयवशात्स्वप्नभोग उपस्थिते।
बोध्यावस्थां तिरोधाय देहाद्याश्रयलक्षणाम् ॥ ४० ॥
कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया।
अवस्थां च प्रयात्यन्यां मायावी चात्ममायया ॥ ४१ ॥

---

प्राप्नोति तद्वल्लिङ्गशरीरे जाते जीवचैतन्यमभिव्यज्यते। घटे नष्टे सति यथाकाशं स्वरूपेणावतिष्ठते तथा लिङ्गभङ्गे जीवः स्वरूपेण सच्चिदानन्दात्मनावतिष्ठते। "तदापीतेः संसारव्यपदेशात्" इत्यस्मिन्नधिकरणे तथैव व्यवस्थापनात्। अवतिष्ठत इति 'समवप्रविभ्यः स्थः' इति तङ् ॥ ३९ ॥ जाग्रदवस्थामभिधाय स्वप्नावस्थामाह—जाग्रदिति। जाग्रद्भोगप्रदं यत्कर्म तस्य क्षयवशात् प्रतिबन्धवशात् स्वप्नभोगप्रदे कर्मण्युद्बुद्धे सति। किं कृत्वा। ये जाग्रत्कालीनदेहगेहादयस्तेषामाश्रयणमाश्रयः। साक्षात्कार इति यावत्। तल्लक्षणां बोधावस्थां तिरोधाय आच्छाद्य ॥ ४० ॥ कर्मेति। कर्मणा स्वप्नभोगप्रदेन उद्भावित उद्बोधितः संस्कारः स्वप्नगजादिजनकीभूतो यस्य स तथा। रिरंसया स्वप्ने नायं रमतामित्याकारिकयेश्वरेच्छयेत्यर्थः। रमेरन्तर्भावितण्यर्थात्सन् ततो भावे अप्रत्ययः। स्वप्नजाता घटपटाद्यः पदार्था अनुभूयन्ते स चानुभूतो न प्रमारूपः प्रमाकरणानामिन्द्रियार्थसंनिकर्षादीनामभावात्। तस्मात्स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादिदोषजन्यत्वात् प्रातिभासिकत्वम्। यत्राध्यासे त्वविद्यैव दोषत्वेन हेतुस्तत्र व्यावहारिकत्वम्। यत्र विद्या चागन्तुकदोषश्चेति द्वयमध्यासे हेतुस्तत्र प्रातिभासिकत्वमिति सिद्धान्तः। ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ रथादिसृष्टिकल्पं गौरवादसांप्रतमिति चेन्न। स्वप्ने रथानद्राक्षमित्यनुभवविरोधापत्तेः। "अथ रथान् रथयोगान्पथः सृजते" इति "संध्ये सृष्टिराह हि"। "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति

घटादिविषयान्सर्वान्बुद्ध्यादिकरणानि च।
भूतानि कर्मवशतो वासनामात्रवस्थितान्॥ ४२॥
एतान्पश्यन्स्वयंज्योतिः साक्ष्यात्मा व्यवतिष्ठते॥ ४३॥
अत्रान्तःकरणादीनां वासनाद्वासनात्मता।
वासनामात्रसाक्षित्वं तेन तच्च परात्मनः॥ ४४॥
वासनाभिः प्रपञ्चोऽत्र दृश्यते कर्मचोदितः।
जाग्रद्भूमौ यथा तद्वत्कर्तृकर्मक्रियात्मकः॥ ४५॥

---

रथादिसृष्टिप्रतिपादकश्रुतिन्यायविरोधापत्तेश्च। अतएव देशकालादिसर्वं प्रातिभासिकमेव। स्वप्नसृष्टिः साक्षान्मायापरिणाम इति प्रतिपादयति—आत्ममाययेति। तथाच मायावी जीवो जाग्रदवस्थातोऽन्यामवस्थामुक्तरूपां प्रयातीत्यन्वयः। विस्तरस्तु दीक्षितीयग्रन्थादवगन्तव्य इति दिक्॥ ४१॥ स्वप्नपदार्थानां शुक्तिरजतादिवत्केवलसाक्षिवेद्यत्वमाह—घटादीति सार्धश्लोकेन। वासनया मातरि प्रमातरि अवस्थितान्। अन्तःकरणोपहितचैतन्ये अध्यस्तानित्यर्थः। तथाभूतान्सर्वान्घटादिविषयान् तथा कर्मवशतो भूतान्युत्पन्नानि बुद्ध्यादीनि करणानि च। एतान्पदार्थान्पश्यन्भासयन् साक्षिभूतात्मावतिष्ठत इति संबन्धः॥ ४२॥ ४३॥ ननु स्वप्नसृष्टेरभ्युपगमे कथं तस्य वासनामात्रावस्थानत्वमिति व्यवहार इत्याशङ्क्याह—अत्रेति। अत्र स्वप्ने पूर्वोक्तानां पदार्थानामन्तःकरणादीनां वासनात् वासनाख्यसंस्कारप्रभवत्वात् वासनात्मत्वं वासनास्वरूपत्वमिति यावत्। तेन कारणेन परात्मनो वासनामात्रसाक्षित्वम्॥ ४४॥ वासनाभिरिति। वासनाभिः संस्कारैरत्र स्वप्ने प्रपञ्चः कर्मणा प्राक्तनेन चोदितः सन् दृश्यते। यथा जाग्रद्भूमौ तद्वत्। जाग्रति व्यावहारिकत्वं प्रपञ्चस्य। स्वप्ने तु प्रातिभासिक-

निःशेषबुद्धिसाक्ष्यात्मा स्वयमेव प्रकाशते ।
वासनामात्रसाक्षित्वं साक्षिणः स्वाप उच्यते ॥ ४६ ॥
भूतजन्मनि यद्भूतं कर्म तद्वासनावशात् ।
नेदीयस्त्वाद्वयस्याद्ये स्वप्नं प्रायः प्रपश्यति ॥ ४७ ॥
मध्ये वयसि कार्कश्यात्करणानामिहार्दितः ।
प्रायेण वीक्षते स्वप्नं वासनाकर्मणोर्वशात् ॥ ४८ ॥
इयासुः परलोकं तु कर्म विद्यादिसंभृतम् ।
भाविनो जन्मनो रूपं स्वप्न आत्मा प्रपश्यति ॥ ४९ ॥

---

स्वमितीयान्भेद इति भावः ॥ ४५ ॥ निःशेषेति । निःशेषाणां बुद्धीनां बोधविषयाणाम् । कर्मणि क्तिन् । साक्षिभूत आत्मा स्वयमेव प्रमाणजन्यवृत्तिनिरपेक्षः सन्नेव प्रकाशते । सर्वत्र प्रातिभासिकरजतादिस्वप्नस्थले तत्तदाकारविद्यावृत्तिः सांप्रदायिकैरङ्गीकृता । तस्मात्स्वप्नस्तु केवलमक्षिभास्य एव । केवलसाक्षिभास्यत्वं नाम इन्द्रियानुमानादिप्रमाणव्यापारमन्तरेणाविद्यावृत्त्यैव भास्यत्वम्। साक्षी तूक्तप्रकारेण स्वयमेव भासत इति भावः। तदेतत्पूर्ववासनामात्रसाक्षित्वं यत्साक्षिणः स स्वापः स्वप्न उच्यते ॥४६॥ भूतजन्मनीति । भूतानामनुभूतानां व्यावहारिकाणां जन्मनि। जाग्रत्काले इतियावत्। यद्यद्भूतं स्तन्यपानकन्दुकक्रीडादिकं कर्म तद्विषयवासनाप्राबल्यादाद्ये वयसि स्वप्नमपि प्रायस्तद्रूपं पश्यति। अत्र हेतुः। नेदीयस्त्वादिति। संनिहितकालिकानुभवगोचरसजातीयत्वादित्यर्थः । अतिशयेनान्तिकं नेदीयः। "अन्तिकबाढकयोर्नेदसाधौ" इति नेदादेशः ॥ ४७ ॥ मध्य इति । तारुण्ये करणानामिन्द्रियाणां कार्कश्यात्पाटवादर्दितः बहुतरव्यापारपीडितः सन् वासना संस्कारस्तत्सहितं यत्कर्म स्वस्वोचिताध्ययनयुद्धकृषिवाणिज्यादि जाग्रत्कालानुभूतं तत्सजातीयमेव संस्कारवशात्प्रायेण वीक्षते-पश्यति ॥ ४८ ॥ इयासुरिति । परलोकं स्वर्गं नरकं

यद्वत्प्रपतनाच्छ्येनः श्रान्तो गगनमण्डले ।
आकुञ्च्य पक्षौ यतते नीडे निलयनाय नीः ॥ ५० ॥
एवं जाग्रत्स्वप्नभूमौ श्रान्त आत्माऽभिसंचरन् ।
आपीतकरणग्रामः कारणेनैति चैकताम् ॥ ५१ ॥
नाडीमार्गैरिन्द्रियाणामाकृष्यादाय वासनाः ।
सर्वं ग्रसित्वा कार्यं च विज्ञानात्मा विलीयते ॥ ५२ ॥
ईश्वराख्येऽव्याकृतेऽथ यथा सुखमयो भवेत् ।
कृत्स्नप्रपञ्चविलयस्तथा भवति चात्मनः ॥ ५३ ॥

---

वा इयासुः । संभावितपरलोकगमन इति यावत् । आशङ्कायां सन् । तादृशो जनः कर्मणा विद्यादिभिश्च संभृतं लब्धप्रायं भाविनो जन्मनो यद्रूपं तद्वासनावशात्स्वप्ने आत्मा प्रकर्षेण पश्यति । मिथ्याभूतस्यापि स्वप्नस्य सूचकतोपपत्तेः । सूचकश्च हि श्रुतेराचक्षते च तद्वदिति ॥ ४९ ॥ एवं जाग्रत्स्वप्नावस्थे निरूप्य सुषुप्त्यवस्थां निरूपयति—तद्वदिति । गगनमण्डले प्रकृष्टपतनाद्बहुतराद्गमनात् श्रान्तः श्येनः नयतीति नीः श्रमपरिहारोपायं विचारयन्सन् पक्षावाकुञ्च्य नीडे निलयनाय संश्लेषाय यद्वद्यतते ॥ ५० ॥ एवं जाग्रत्स्वप्नभूमौ संचरन् श्रान्त आत्मा जीवः अपीतो विलीनः करणग्राम इन्द्रियवर्गो यस्मिन्नेवंभूतः सन् कारणेनेश्वरेण सह एकतामेति प्राप्नोति । यद्यप्यामोक्षं जीवब्रह्मणोरौपाधिको भेदोस्त्येव तथाप्यहंकारविलयात्स्वरूपसुखांशो जाग्रत्कालापेक्षयाधिको भवति । दुःखं च नास्तीत्येतावन्मात्रेण एकतामेतीत्युक्तम् । एतेन “सता सौम्य तदा संपन्नो भवति प्राज्ञेन संपरिष्वक्तः” इत्यादिश्रुतयोऽपि विख्याताः ॥ ५१ ॥ नन्वीश्वरेण सहैकतां प्राप्तश्चेत्तर्हि पुनरनुत्थानापत्तिरित्याशङ्क्याह—नाडीति । विज्ञानात्मा जीवो नाडीमार्गैरिन्द्रियाणां वासनाः संस्कारान्समाकृष्याविद्ययेति शेषः । सर्वमविद्याकार्यं जाग्रत्स्वप्नरूपं ग्रसित्वा विलीयते ॥ ५२ ॥ कुत्रेत्याकाङ्क्षायामाह—ईश्वरेति । ईश्वराख्ये अव्या-

योषितः काम्यमानायाः संभोगान्ते यथासुखम्।
स आनन्दमयोऽबाह्यो नान्तरः केवलस्तथा ॥ ५४ ॥
प्राज्ञात्मानं समासाद्य विज्ञानात्मा तथैव सः।
विज्ञानात्मा कारणात्मा तथा तिष्ठन्नथापि सः॥ ५५ ॥
अविद्यासूक्ष्मवृत्त्यानुभवत्येव यथा सुखम्।
तथाहं सुखमस्वाप्सं नैव किंचिदवेदिषम् ॥ ५६ ॥

---

कृते मायोपहितचैतन्ये विलीयते। अतस्तत्र यानानन्तरं यथा सुखमयो भवति तथा कृत्स्नप्रपञ्चविलयो भवति। नायं लिङ्गभङ्गरूपः। तस्यामोक्षमवस्थानात्। किंतु संस्काररूपेणावस्थानमेव विलीयत इत्युच्यते। एवमेव कार्यब्रह्मणोऽपि दिनावसाने ईश्वरे विलयो द्रष्टव्यः ॥५३॥ कीदृशं तत्सुखमित्याकाङ्क्षायामाह—योषित इति। काम्यमानाया योषितः संभोगस्य अन्ते मध्य इत्यर्थः। यथासुखं सर्वेभ्यो वैषयिकसुखेभ्योऽधिकं सुखं भवति। तथा सुषुप्तावधिकं सुखं भवति। अतएव स आनन्दमयः। प्रचुरानन्द इत्यर्थः। तदानीं जीवः अबाह्यः विषयसंबन्धजनितवृत्तिविशिष्टज्ञानो न भवतीत्यर्थः। नान्तरः मोक्षावस्थायामिव निवृत्तमूलाचरणोऽपि नेत्यर्थः। निर्वृत्तिकसुखाभिव्यक्तौ मोक्षः स्यात्। तस्मात्तत्राप्यहंकारवृत्तिरस्त्येवेति सिद्धान्तः। तदुक्तमाचार्यभगवत्पादैः। "सुप्तिगतः सुखलेशैरभिमनुते यः सुखी भवामीति। आनन्दकोशनामा सोऽहंकारः कथं भवेदात्मा॥" इति ॥ ५४ ॥ तदेवाह—प्राज्ञेति। प्राज्ञात्मानमीश्वरं समासाद्य सुषुप्तौ प्राप्यापि सः सुषुप्तः विज्ञानात्मा जीवः तथा जाग्रदादौ यथा तद्वदनपगतभेद इत्यर्थः। तथा तिष्ठन् भिन्नोऽपि सन् सः जीवः दुःखराहित्यसाम्यात्कारणात्मोच्यते। ईश्वर एवेत्युपचर्यत इत्यर्थः ॥५५॥ ननु सुषुप्तावन्तःकरणस्य विलीनत्वात्सुप्तोत्थितस्य सुखमहमस्वाप्समित्यनुसंधानं न स्यादित्याशङ्क्याह—अविद्येति। अविद्यायाः सूक्ष्मवृत्त्या यथा सुखं भवति तथा सुखमहमस्वाप्समिति जीवोऽनुभव-

अज्ञानमपि साक्ष्यादिवृत्तिभिश्चानुभूतये ।
इत्येवं प्रत्यभिज्ञापि पश्चात्तस्योपजायते ॥ ५७ ॥
जाग्रत्स्वप्नसुषुप्त्याख्यमेवेहामुत्र लोकयोः ।
पश्चात्कर्मवशादेव विस्फुलिङ्गा इवानलात् ।
जायन्ते कारणादेव मनोबुद्ध्यादिकानि तु ॥ ५८ ॥
पयःपूर्णघटो यद्वन्निमग्नः सलिलाशये ।
तैरेवोद्धृत आयाति विज्ञानात्मा तथैत्यजात् ॥ ५९ ॥
विज्ञानात्मा कारणात्मा तथा तिष्ठंस्तथापि सः ।
दृश्यते सर्वमेष्वेव नष्टेष्वायात्यदृश्यताम् ॥ ६० ॥

---

त्येव अनुसंधत्त इत्यर्थः ॥ ५६ ॥ ननु न किंचिदवेदिषमित्यज्ञानानुसंधानमपि कथं तत्राह—अज्ञानमपीति । न केवलं सुखमेवानुसंधत्ते किंतु अज्ञानमपि । साक्ष्यादिवृत्तिभिः स्वापकालीनाभिरविद्यावृत्तिभिरज्ञानमप्यनुभूयते । अतस्तदनुसंधत्ते न किंचिदवेदिषमिति । उक्तंच पञ्चपादिकायाम् “सुषुप्त्यादौ चाहंकारादिविक्षेपः संस्कारमात्रशेषं स्थित्वा पुनरुद्भवति” इति ॥ ५७ ॥ तदेवमवस्थात्रयं निरूपितम् । इदं च इहलोकपरलोकयोः साधारणमित्याह—जाग्रदिति । देवादीनामप्यवस्थात्रयमस्त्येवेति शेषः । अमुत्र लोको देवादीनामुपलक्षणार्थः । सुषुप्त्यनन्तरं जाग्रत्प्रपञ्चः पुनरुद्भवतीति सदृष्टान्तमाह—पश्चादिति । सुषुप्त्यनन्तरमित्यर्थः । जाग्रदवस्थादृष्टवशात्कारणात् जीवाज्ञानादेव सूक्ष्मरूपेणावस्थितानि बुद्ध्यादिकानि पुनर्जायन्ते । स्थूलाकारेण परिणमन्तीत्यर्थः । तत्र दृष्टान्तः । अनलाद्विस्फुलिङ्गा इव ॥ ५८ ॥ दृष्टान्तान्तरं च—पयःपूर्णेति । अजातपरमात्मनः सकाशात् । अनेन भेद एव तयोः सूचितः । उभयोरप्युपाधिसत्वात् ॥ ५९ ॥ अध्यायोपक्रमे जीवस्वरूपं कथमिति

एकाकारोऽर्यमा तत्तत्कार्येष्वेवं परः पुमान् ।
कूटस्थो दृश्यते तद्वद्गच्छत्यागच्छतीव सः ॥ ६१ ॥
मोहमात्रान्तरायत्वात्सर्वं तस्योपपद्यते ।
देहाद्यतीत आत्मापि स्वयंज्योतिः स्वभावतः ।
एवं जीवस्वरूपं ते प्रोक्तं दशरथात्मज ॥ ६२ ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे जीवस्वरूपवर्णनं नाम दशमोऽध्यायः ॥ १० ॥

---

रामेण पृष्टं तदुत्तरत्वेन सप्रपञ्चं तदुक्त्वा तात्पर्यं विशदयति—विज्ञानेति । सः परमात्मापि । एवार्थोऽपिः । विज्ञानात्मा जीवः कारणात्मा ईश्वरस्तथा तथा तिष्ठन् रूपद्वयेन स्थित इत्यर्थः । एषु अज्ञानतत्कार्येषु सत्स्वेव सर्वं जीवेश्वरादिभेदपूर्वकं प्रपञ्चजातं दृश्यते । अज्ञानादिषु नष्टेषु त्वदृश्यतामायाति ॥ ६० ॥ उक्तमर्थं दृष्टान्तेन द्रढयति—एकेति । एकाकारोऽपि एकोप्यर्यमा सूर्यः तत्तत्कार्येषु जलादिषूपाधिषु दृश्यते । एवं स परः पुमान्कूटस्थोऽपि निर्विकारोऽपि तद्वदुपाधिवशाद्गच्छत्यागच्छतीति दृश्यते ॥६१॥ ननु सर्वे विरुद्धधर्माः कथमेकत्र स्वीकार्या इत्याशङ्क्याह—मोहेति । मोहमात्र एवान्तरायः स्वरूपस्फूर्तिप्रतिबन्धकः तस्य भावस्तत्त्वं तस्मात्सर्वं विरुद्धधर्मादिकं तस्य परमात्मन उपपद्यते । विरुद्धधर्माणां स्वसमानभेदप्रयोजकत्वं नास्तीति भावः । तदुक्तम् "कूटस्थमनुपद्रुत्य करोति जगदादिकम् । दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः । मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ । यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥" इति ॥ ६२ ॥ इति शिवगीताटीकायां दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ११

श्रीभगवानुवाच ।

देहान्तरगतिं तस्य परलोकगतिं तथा ।
वक्ष्यामि नृपशार्दूल मत्तः शृणु समाहितः ॥ १ ॥
भुक्तं पीतं यतस्तत्र तद्रसादामबन्धनम् ।
स्थूलदेहस्य लिङ्गस्य तेन जीवनधारणम् ॥ २ ॥
व्याधिना जरया वापि पीड्यते जाठरोऽनलः ।
श्लेष्मणा तेन भुक्तान्नं पीतं वा न पचत्यलम् ॥ ३ ॥
भुक्तपीतरसाभावात्तदा शुष्यन्ति धातवः ।
भुक्तपीतरसेनैव देहे लिम्पन्ति वायवः ॥ ४ ॥

---

गमनागमने कथमिति प्रश्ने लिङ्गोपाधिवशादित्युत्तरं दत्तं तदेव विशदयितुमेकादशोऽध्याय आरभ्यते—देहान्तरेति । नृपशार्दूल राजश्रेष्ठ, मत्तः मत्सकाशात् । अवहितः सावधानः ॥१॥ भुक्तमिति । यत इति प्रथमान्तात्तसिः । भुक्तं पीतं च यतः यदित्यर्थः । तस्य रसात्परिणामविशेषात्स्थूलदेहस्य लिङ्गस्य च परस्परं आमबन्धनं नूतनबन्धनं भवतीति शेषः । तेन दृढबन्धनेन जीवस्य प्राणवायोर्धारणं भवति ॥२॥ व्याधिनेति । व्याधिना रोगेण जरया वा प्रेरितेन श्लेष्मणा जाठरो जठरसंबन्धी अनलः पीड्यते । तेन कारणेन कुण्ठितशक्तिरग्निर्भुक्तान्नं पीतं वा अलं पर्याप्तं न पचति ॥३॥ भुक्तेति । भुक्तपीतयो रसस्य परिणामविशेषस्याभावात् तदा धातवस्त्वगसृङ्मांसादयः शुष्यन्ति । धातुवृद्धिप्रकारमाह । भुक्तपीतयोः प्रदीप्तेन जाठराग्निना पाचितयो रसेन वायवः प्राणादयो देहे धातून् लिम्पन्ति । उपचयं प्रापयन्तीति यावत् । अत्र धातुवायुप्रकरणवशाद्यथायथं तेषां तेषां

समीकरोति यत्तस्मात्समानो वायुरुच्यते ।
तदानीं तद्रसाभावादामबन्धनहानितः ॥ ५ ॥
परिपक्वरसत्वेन यथा गौरवतः फलम् ।
स्वयमेव पतत्याशु तथा लिङ्गं तनोर्व्रजेत् ॥ ६ ॥
तत्तत्स्थानादपाकृष्य हृषीकाणां च वासनाः ।
आध्यात्मिकाधिभूतानि हृत्पद्मे चैकतां गतः ॥ ७ ॥
ततोऽध्वगः प्राणवायुः संयुक्तो नववायुभिः ।
ऊर्ध्वोच्छ्वासी भवत्येष तथा तेनैकतां गतः ॥ ८ ॥

---

चाध्याहारः ॥ ४ ॥ वायुविशेषस्तु लिप्तान्धातून्समीकरोति । यद्य-स्मात्तस्मात्समानो वायुरुच्यते । एषा तारुण्यावस्थायाः स्थितिरुक्ता । इदानीं जरसि जठरानलमान्द्यकाले तु तेषां भुक्तपीतानां रसस्या-भावात् आमबन्धनस्य पूर्वोक्तस्य हानितः लिङ्गं तनोर्व्रजेदित्यनेन वक्ष्यमाणेन संबध्यते ॥ ५ ॥ परिपक्वेति । यथा कूष्माण्डादिफलं गौरवतः गुरुत्वात्स्वयमेव पतति तथा लिङ्गं तनोः स्थूलदेहाद्व्र-जेत् । विश्लेषं प्राप्नुयादित्यर्थः ॥६॥ तत्तदिति । हृषीकाणामिन्द्रि-याणां वासनाः । तथाध्यात्मिकानि जीवात्मन्यध्यस्तानि बुद्धिप्रभृ-तीनि तथाधिभौतिकानि भाविदेहारम्भकाणि सोमादिपयःप्रभृतीनि सूक्ष्मरूपाणि इत्थं त्रितयमप्याकृष्य हृत्पद्मे एकतां गतः पांसूदकव-त्पिण्डितस्वरूप एष प्राणवायुः अध्वगः पान्थः सन् इतरैर्नवभिर्वा-युभिः संयुक्तः सन् ऊर्ध्वोच्छ्वासी भवति । तथा तेन प्राणवायुना एकतां गतस्तादात्म्यापन्नो जीवोऽपि उपसर्पतीति वक्ष्यमाणेन संब-ध्यते । अत्र भाविदेहारम्भकीभूतैः सहोत्क्रमणं श्रुतिराह "पञ्चम्या-माहुतावापः पुरुषवचसो भवन्तीति", "तदन्तरप्रतिपत्तौ रंहतिसंप-रिष्वक्तः प्रश्ननिरूपणाभ्याम्" इत्यधिकरणे च निर्णीतं ततएव बोध्यम्

चक्षुषोर्वापि मूर्ध्नो वा नाडीमार्गं समाश्रितः ।
विद्याकर्मसमायुक्तो वासनाभिश्च संयुतः ।
प्राज्ञात्मानं समाश्रित्य विज्ञानात्मोपसर्पति ॥ ९ ॥
यथा कुम्भो नीयमानो देशाद्देशान्तरं प्रति ।
खपूर्ण एव सर्वत्र स आकाशोऽपि तत्र तु ॥ १० ॥
घटाकाशाख्यतां याति तद्वल्लिङ्गं परात्मनः ॥ ११ ॥
पुनर्देहान्तरं याति यथा कर्मानुसारतः ।
आमोक्षात्संचरत्येवं मत्स्यः कूलद्वयं यथा ॥ १२ ॥
पापभोगाय चेद्गच्छेद्यमदूतैरधिष्ठितः ।
यातनादेहमाश्रित्य नरकानेव केवलम् ॥ १३ ॥

---

॥ ७ ॥ ८ ॥ कस्मान्मार्गादुपसर्पतीत्याकाङ्क्षायामाह—चक्षुषोरिति । विद्याकर्मभ्यां समायुक्तः वासनाभिश्च पूर्वप्रज्ञानुसारिणीभिः संयुतः । तथाच श्रुतिः "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति । प्रज्ञात्मानं समाश्रित्य । तत्प्रेरितः सन्नित्यर्थः । तथाच श्रुतिः "प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" इति । उत्सर्जन् हिक्कादिशब्दं कुर्वन् उपसर्पति औपाधिकगमनभाग्भवति । नहि मुख्यं गमनं पूर्णस्य संभवति ॥ ९ ॥ औपाधिकगमनमेव दृष्टान्तेन द्रढयति—यथेति । सर्वत्र स घटः खपूर्णएव सर्वो घटावच्छिन्नाकाश इति व्यवह्रियते । तत्र घट आनीते घटाकाशोऽयमिति व्यवह्रियते तद्वत्परात्मनो जीवस्य लिङ्गशरीरं जीवपूर्णमेव याति । यतो देहाद्याति तत्र न जीवत्वव्यवहारः । यस्मिन्देहे तिष्ठति तत्रैव जीव इति व्यवहार इति भावः ॥ १० ॥ ११ ॥ पुनरिति । आमोक्षात् मोक्षपर्यन्तमित्यर्थः । कूलद्वयं तीरद्वयम् ॥ १२ ॥ पापेति । केवलं पापभोगाय चेद्गच्छेत्तर्हि नरकानेव गच्छेत् । उभयभोगाय चेन्मनुष्यलोकं गच्छेदिति भावः । "उभाभ्यां मनुष्यलोकः" इति श्रुतेः ॥ १३ ॥

इष्टापूर्तानि कर्माणि योऽनुतिष्ठति सर्वदा।
पितृलोकं व्रजत्येष याममाश्रित्य बर्हिषः॥ १४॥
धूमं रात्रिं गतः कृष्णपक्षं तस्माच्च दक्षिणम्।
अयनं च ततो लोकं पितॄणां च ततः परम्।
चन्द्रलोके दिव्यदेहं प्राप्य भुङ्क्ते परां श्रियम्॥ १५॥
तत्र चन्द्रसमानोऽसौ यावत्कर्मफलं वसेत्।
तथैव कर्मशेषेण यथेतं पुनराव्रजेत्॥ १६॥

---

इष्टेति। इष्टानि यज्ञान्, पूर्तानि तडागारामादीन् यः सर्वदानुतिष्ठति एष सुकृती यामं यमसंबन्धिनं दूतमाश्रित्य तेन नीयमानः सन्नित्यर्थः। बर्हिषः श्रौतस्मार्ताग्नेश्च हेतुभूतादित्यर्थः। यागस्याग्निसाध्यत्वात्सोऽपि तत्र परम्परया प्रयोजक इति भावः। पितृलोकं व्रजति। "कर्मणा पितृलोकः" इति श्रुतेः। "बर्हिः शुष्मा कृष्णवर्त्मा" इत्यमरः। अत्र बर्हिरिति पृथक्पदं बर्हिर्मुखा इति दर्शनादिति क्षीरस्वामी॥१४॥ धूममिति। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति" इत्युपक्रम्य "आकाशाच्चन्द्रमसम्" इत्यन्तेन धूमादिः पितृयाणः पन्था इष्टादिकारिणां श्रुतावुक्तः। तदेतदाह प्रथमं धूमं ततो रात्रिं ततः कृष्णपक्षं तस्माद्दक्षिणायनं ततः पितॄणां लोकं ततश्चन्द्रलोकं गतः सन् दिव्यदेहं प्राप्य चन्द्रसमानोऽसाविष्टादिकारी परां श्रियं भुङ्क्ते। यावत्कर्मफलं तत्र वसेत्। धूमो रात्रिः कृष्णपक्षो दक्षिणायनं चेत्याद्या आतिवाहिका देवता निर्दिश्यन्ते ता एनमिष्टादिकारिणं चन्द्रलोकं प्रापयन्ति। तदुक्तं गीतायाम् "धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥" इति। तथाच यदाकदाचा मृतमुपासकमग्न्यादय आतिवाहिका ब्रह्मलोकं प्रापयन्तीति तथेष्टा-

वपुर्विहाय जीवत्वमासाद्याकाशमेति सः।
आकाशाद्वायुमागत्य वायोरम्भो व्रजत्यथ॥ १७॥
अद्भ्यो मेघं समासाद्य ततो वृष्टिर्भवेदसौ।
ततो धान्यानि भक्ष्याणि जायते कर्मचोदितः॥ १८॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
मुक्तिमन्ये तु संयान्ति यथाकर्म यथाश्रुतम्॥ १९॥

---

दिकारिणं यदाकदावा मृतमपि धूमादय आतिवाहिकाश्चन्द्रमसं प्रापयन्तीति निष्कर्षः। 'आतिवाहिकास्तल्लिङ्गात्'। 'अतश्चायनेऽपि दक्षिणे' इति न्यायात्। यथेतमिति यथागतम्। उपलक्षणं चेदम्। येन क्रमेण चन्द्रलोकगतस्तद्विपरीतक्रमेणेमं लोकमायातीत्यर्थः। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति स्मृतेः॥ १५॥ १६॥ वपुर्विहायेति। चन्द्रलोके भोगशरीरं विहाय जीवत्वं लिङ्गशरीरावच्छिन्नत्वं प्राप्य अवरोहति। अवरोहक्रममाह—आकाशमेति स इत्यादिना। आकाशं आकाशत्वमित्यादिभावप्रधानो निर्देशः॥ १७॥ ततः क्रमेणासौ जीवो वृष्टिर्भवेत्तत्राकाशादिसाम्यमभिप्रेतं नतु तदभेदः। "संभाव्यापत्तिरुपपत्तेः" इति न्यायात्। ततो धान्यानि ततो भक्ष्याण्यन्नानीत्यर्थः। सः जायते कर्मणा प्रारब्धेन चोदितः सन्॥ १८॥ इयं च धूमादिमार्गेण गतानां पुनरावृत्तिर्न नियता सर्वेषां किंतु प्राचुर्येणेत्याह—योनिमिति। मुक्तिमिति। अन्ये तूत्तमाधिकारिणः यथाकर्म चित्तशुद्धिमुद्दिश्याचरितकर्मानुसारेणेत्यर्थः। यथाश्रुतं चन्द्रलोके कृतश्रवणादिसाधनानुसारेणेत्यर्थः। मुक्तिं संयान्ति। मुक्तिमिति क्रममुक्तिमित्यर्थः। "तदुपर्यपि बादरायणः संभवात्" इत्यधिकरणे स्वर्गलोकादावपि श्रवणादिसाधनेन मोक्षो भवति इति निर्णयात्। तथाच श्रुतिः "तद्यो यो देवानां प्रत्यबुध्यत स तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति॥ १९॥

ततोऽन्नत्वं समासाद्य पितृभ्यां भुज्यते परम्।
ततः शुक्रं रजश्चैव भूत्वा गर्भोऽभिजायते ॥ २० ॥
ततः कर्मानुसारेण भवेत्स्त्रीपुंनपुंसकः।
एवं जीवगतिः प्रोक्ता मुक्तिं तस्य वदामि ते ॥ २१ ॥
यस्तु शान्त्यादियुक्तः सन् सदा विद्यारतो भवेत्।
स याति देवयानेन ब्रह्मलोकावधिं नरः ॥ २२ ॥
अर्चिर्भूत्वा दिनं प्राप्य शुक्लपक्षमथो व्रजेत्।
उत्तरायणमासाद्य संवत्सरमथो व्रजेत् ॥ २३ ॥

---

ततोऽन्नत्वमिति। अन्नत्वं समासाद्य स्थितो जीवः पितृभ्यां पुनः स्थूलदेहतादात्म्याध्यासाय भुज्यते। ततः पितरि शुक्ररूपेण मातरि रजोरूपेण स्थित्वा स्त्रीपुरुषसंयोगे सति स्त्रियां गर्भोऽभिजायते। ततः कर्मानुसारेणेति स्पष्टम् ॥ २० ॥ २१ ॥ मुक्तिं तस्य वदामि त इत्युक्तं तदेवोपपादयति—यस्त्वित्यादिना। शमदमतितिक्षासमाधानश्रद्धायुक्तः सन् सदा विद्यायां रतः स्ववर्णाश्रमकर्माणीश्वरार्पणधिया कुर्वाणश्चेत्यादिपदात्संग्रहः। स देवयानेन पथा "तेऽर्चिषमभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षं" इत्याद्युपक्रम्य "य एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति श्रुत्युक्तेन ब्रह्मलोक एवावधिस्तं याति। नरोऽधिकारी जीवः ॥ २२ ॥ देवयानं पन्थानं श्रुत्युक्तं श्लोकतः संगृह्णाति—अर्चिरित्यादिना। दिव्यः श्रुत्युक्तो मानवः पुरुषः इह विद्युल्लोक एति तत्रागत्य तमुपासकं गृहीत्वा ब्रह्मलोकं गमयतीति शेषः। तत्रैव तस्योपासकस्य श्रवणादिज्ञानोदये ब्रह्मणा सह मुक्तिः नतु पुनरावृत्तिः। "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति श्रुतेः। "ब्राह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति स्मृतेश्च। अत्रच संवत्सरादित्ययोर्मध्ये

आदित्यचन्द्रलोकौ तु विद्युल्लोकमतः परम्।
अथ दिव्यः पुमान्कश्चिद्ब्रह्मलोकादिहैति सः॥ २४॥
दिव्ये वपुषि संधाय जीवमेवं नयत्यसौ॥ २५॥
ब्रह्मलोके दिव्यदेहे भुक्त्वा भोगान्यथेप्सितान्।
तत्रोषित्वा चिरं कालं ब्रह्मणा सह मुच्यते॥ २६॥
शुद्धब्रह्मरतो यस्तु न स यात्येव कुत्रचित्।
तस्य प्राणा विलीयन्ते जले सैन्धवखिल्यवत्॥ २७॥
स्वप्नद्दष्टा यथा सृष्टिः प्रबुद्धस्य विलीयते।
ब्रह्मज्ञानवतस्तद्वद्विलीयन्ते तदैव ते।
विद्याकर्मविहीनो यस्तृतीयं स्थानमेति सः॥ २८॥
भुक्त्वा च नरकान्घोरान्महारौरवरौरवान्।
पश्चात्प्राक्तनशेषेण क्षुद्रजन्तुर्भवेदसौ॥ २९॥
यूकामशकदंशादि जन्मासौ लभते भुवि।
एवं जीवगतिः प्रोक्ता किमन्यच्छ्रोतुमिच्छसि॥ ३०॥

---

देवलोकवायुलोकौ विद्युदनन्तरं वरुणेन्द्रप्रजापतिलोकाः श्रुत्यन्तरोक्ता उपसंहर्तव्या इति दिक्॥ २३॥ २४॥ २५॥ २६॥ २७॥ २८॥ इदानीं पापभोगाय चेद्गच्छेद्यमदूतैरधिष्ठित इत्यादिपूर्वोक्तरीत्या नरकं गतस्य पश्चाद्भाविनीमवस्थामाह—भुक्त्वा चेति। ततो बहुभिर्जन्मसहस्रैः केनचित्पुण्यपरिपाकेन ज्ञानी भूत्वा मुक्तो भवतीति भावः। माध्वास्तु "न स पुनरावर्तते" इति श्रुतिर्मुक्तानामन्धतमोगानां च समैवेति जल्पन्ति तेषां गौतमादिसप्तानां चतुरादिश्रुतिब्रह्मतर्कमूलरामायणादिस्मृतिकल्पकानां दुर्मतं वैदिकैः कौतुकायापि

राम उवाच।

भगवन्यत्त्वया प्रोक्तं फलं तु ज्ञानकर्मणोः।
ब्रह्मलोके चन्द्रलोके भुङ्क्ते भोगानिति प्रभो ॥ ३१ ॥
गन्धर्वादिषु लोकेषु कथं भोगः समीरितः।
देवत्वं प्राप्नुयात्कश्चित्कश्चिदिन्द्रत्वमेव च ॥ ३२ ॥
एतत्कर्मफलं वास्तु विद्याफलमथापि वा।
तद्ब्रूहि गिरिजाकान्त तत्र मे संशयो महान् ॥ ३३ ॥

श्रीभगवानुवाच।

तद्विद्याकर्मणोरेवानुसारेण फलं भवेत्।
युवा च सुन्दरः शूरो नीरोगो बलवान्भवेत् ॥ ३४ ॥
सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कण्टकं यदि।
स प्रोक्तो मानुषानन्दस्तस्माच्छतगुणो मतः ॥ ३५ ॥
मनुष्यस्तपसा युक्तो गन्धर्वो जायतेऽस्य तु।
तस्माच्छतगुणो देवगन्धर्वाणां न संशयः ॥ ३६ ॥

---

नावलोकनीयमित्यन्यत्र विस्तरः ॥ २९ ॥ ३० ॥ उपासनाया इष्टापूर्तादिकर्मणश्च फलं यथाक्रमं ब्रह्मलोकचन्द्रलोकप्राप्तिरूपमुक्तं गन्धर्वसूर्येन्द्रादिलोकप्राप्तिस्तत्किमिदमुपासनाफलं विद्याफलं वेति संदिहानः पृच्छति—भगवन्निति। ज्ञानमुपासा कर्म इष्टापूर्तादि तयोः फलं तूक्तम् ॥ ३१ ॥ ३२ ॥ एतत्कर्मफलं वास्तु अथवा विद्याया उपासनायाः फलम् ॥ ३३ ॥ उत्तरमाह—तदिति। विद्याकर्मणोः पूर्वोक्तयोरेव तारतम्यानुसारेण फलतारतम्यं स्यात् तदेव मानुषाद्यानन्दानां तारतम्यमाह—युवा चेत्यादिना ॥ ३४ ॥ ३५ ॥ मनुष्य इति। तपसा युक्तः सन् गन्धर्वो जायते। अस्य गन्धर्वतां प्राप्तस्यानन्दः पूर्वोक्तमानुषानन्दाच्छतगुणोऽधिक इति संबन्धः। उक्तगन्धर्वानन्दाद्दे-

एवं शतगुणानन्द उत्तरोत्तरतो भवेत्।
पितॄणां चिरलोकानामाजानसुरसंपदाम्॥ ३७॥
देवतानामथेन्द्रस्य गुरोस्तद्वत्प्रजापतेः।
ब्रह्मणश्चैवमानन्दाः पुरस्तादुत्तरोत्तरम्॥ ३८॥
ज्ञानाधिक्यात्सुखाधिक्यं नान्यदस्ति सुरालये।
श्रोत्रियोऽवृजिनोऽकामहतो यश्च द्विजो भवेत्॥ ३९॥
तस्याप्येवं समाख्याता आनन्दाश्चोत्तरोत्तरम्।
आत्मज्ञानात्परं नास्ति तस्माद्दशरथात्मज॥ ४०॥

---

वगन्धर्वाणामानन्दः शतगुणः॥ ३६॥ एवमिति। वक्ष्यमाणानां पित्रादीनामप्यानन्दः क्रमेणोत्तरोत्तरं शतगुणो बोद्धव्य इत्यर्थः। षष्ठ्यर्थे तसिः। पितॄणां चिरलोकानां तथा आजानदेवानां कर्मणा देवत्वं प्राप्तानाम्। तथा देवानां अथेन्द्रस्य बृहस्पतेस्तद्वत्प्रजापतेः ब्रह्मणश्च। पुरस्तात्पूर्वस्मादुत्तरोत्तरं शतगुण इति सर्वत्र योजनीयम्॥ ३७॥ ३८॥ ज्ञानाधिक्यादिति ज्ञानशब्दः कर्मणोरप्युपलक्षकः। उपासनायाः कर्मणश्च तारतम्यात्स्वर्गे सुखतारतम्यमित्यर्थः। अन्यत्सुखं तारतम्यंप्रति कारणं नास्तीत्यर्थः। इदानीं श्रुतौ प्रतिपर्यायं "श्रोत्रियस्य चाकामहतस्य" इत्याम्नातं तस्याशयं संगृह्णाति "श्रोत्रियश्छन्दोऽधीते" इति निपातनात्साधुः। वेदपारग इत्यर्थः। अवृजिनो निष्पापः अकामहतो निष्कामः एवंभूतो यो द्विजो भवेत्। द्विजग्रहणं ब्रह्मक्षत्रविशां परिग्रहार्थम्॥ ३९॥ तस्यापीति। एवंभूतो य आत्मज्ञानी द्विजस्तस्यापि। अपिः समुच्चये। पूर्वोक्ताः सर्वे आनन्दा एवं युगपत्प्राप्तुं भवन्ति। "सोऽश्नुते सर्वान्कामान्सह" इति श्रुतेः। "आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।

ब्राह्मणः कर्मभिर्नैव वर्धते नैव हीयते ।
न लभ्यः पातकेनैव कर्मणा ज्ञानवान्यदि ॥ ४१ ॥
तस्मात्सर्वाधिको विप्रो ज्ञानवानेव जायते ।
ज्ञात्वा यः कुरुते कर्म तस्याक्षय्यफलं भवेत् ॥ ४२ ॥
यत्फलं लभते मर्त्यः कोटिब्राह्मणभोजनैः ।
तत्फलं समवाप्नोति ज्ञानिनं यस्तु भोजयेत् ॥ ४३ ॥
ज्ञानवन्तं द्विजं यस्तु द्विष्यते च नराधमः ।
स शुष्यमाणो म्रियते यस्मादीश्वर एव सः ॥ ४४ ॥

---

तद्वत्कामा यं प्रविशन्ति सर्वे" इति स्मृतेश्च । यस्मादेवं तस्मात् आत्मज्ञानात्परमुत्कृष्टं नास्ति "नान्यः पन्था अयनाय विद्यते । ज्ञानादेव तु कैवल्यं" इत्यादिश्रुतेः ॥ ४० ॥ ज्ञानिप्रशंसामाह— ब्राह्मण इति । ब्राह्मणो ब्रह्मवित् विधिनिषेधावविद्वद्विषयकावेवेति भावः । यद्येवंविधो ज्ञानी यदि स्यात् सः पातकेन कर्मणा नैव लभ्यः प्राप्यः । पुण्यपुञ्जैरेव प्राप्य इति भावः ॥ ४१ ॥ यस्मादेवं तस्माद्यो ज्ञानवान्विप्रः स एव सर्वाधिको भवतीत्यर्थः । "ज्ञानी त्वात्मैव मे मतम्" इति स्मृतेः । तस्य सेवायां फलमाह—ज्ञात्वेति । यः सुकृती ज्ञानिनं ज्ञात्वा तस्य कर्म सेवां कुरुते तस्य सुकृतिनः अक्षय्यं फलं भवेत् । परम्परया मोक्षपर्यवसायि स्यादिति भावः ॥ ४२ ॥ यत्फलमिति स्पष्टम् ॥ ४३ ॥ ज्ञानवन्तमिति । द्विष्यते द्वेष्टि सः शुष्यमाणः क्षयरोगी सन् म्रियते । यस्मात् ज्ञानी ईश्वर एव तस्मात् । "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति स्मृतेः । मम तस्य च भेदो न स्वात्मत्वेन किंतु लोकदृष्ट्यैवेति तदर्थः । तदेवमधिगतपरमार्थः कृतकृत्य एवेति व्यवस्थापितम्

उपासको न यात्येव यस्मात्पुनरधोगतिम्।
उपासनरतो भूत्वा तस्मादास्स्व सुखी नृप ॥ ४५ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे शारीरनिरूपणं नाम एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः १२

श्रीराम उवाच।

भगवन्देवदेवेश नमस्तेऽस्तु महेश्वर।
उपासनविधिं ब्रूहि देशं कालं च तस्य तु ॥ १ ॥

ईश्वर उवाच।

शृणु राम प्रवक्ष्यामि देशकालमुपासनम्।
मदंशेन परिच्छिन्ना देहाः सर्वदिवौकसाम् ॥ २ ॥

---

॥ ४४ ॥ निर्गुणब्रह्मचिन्तनमसुकरं चेन्मन्यसे तर्हि मम सगुणस्योपासनं कुर्वित्याह—उपासक इति। "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इति स्मृतेः। आस्स्व वर्तस्व। सुखी संसारभयरहितः ॥ ४५ ॥ इति श्रीलक्ष्मीनरहरिसूनुहरिपण्डितविरचितायां शिवगीताटीकायां बालानन्दिन्यामेकादशोऽध्यायः ॥ ११ ॥

पूर्वाध्यायान्ते उपासकोऽर्चिरादिमार्गेणोर्ध्वगतिमेव गच्छति ततो मुक्तिम्। अधोगतिं पुनर्न गच्छति तस्मात्त्वमुपासनरतो भवेत्युक्तं तत्रोपासाविधिं जिज्ञासू रामः पृच्छति—भगवन्निति। उपासनस्य विधिमनुष्ठानप्रकारं तु पुनः देशकालयोः समाहारः देशकालं तु अपि। तदपीत्यर्थः। ब्रूहि ॥ १ ॥ शृण्विति। उपासनविधिमित्यर्थः। सर्वदिवौकसां देहाः मदंशेनाहंकारेण परिच्छिन्नाः पृथक्कृताः। यद्वा मदंशेन प्रतिबिम्बचैतन्येनोपलक्षिताः अतएव परिच्छिन्नाः तत्तदन्तःकरणप्रतिबिम्बितचैतन्यभेदाद्भिन्ना नतु परमार्थत इति भावः ॥ २ ॥

ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव राजेन्द्र यजन्त्यविधिपूर्वकम् ॥ ३ ॥
यस्मात्सर्वमिदं विश्वं मत्तो न व्यतिरिच्यते ।
सर्वक्रियाणां भोक्ताहं सर्वस्याहं फलप्रदः ॥ ४ ॥
येनाकारेण ये मर्त्या मामेवैकमुपासते ।
तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे ॥ ५ ॥
विधिनाऽविधिना वापि भक्त्या ये मामुपासते ।
तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः ॥ ६ ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ७ ॥
स्वजीवत्वेन यो वेत्ति मामेवैकमनन्यधीः ।
तं न पश्यन्ति पापानि ब्रह्महत्यादिकान्यपि ॥ ८ ॥

---

ततः किं तत्राह—ये त्विति । ये भक्ता अन्यदेवान्यजन्ते तेऽपि मामेव यजन्ति । किंतु अविधिपूर्वकं । अहमेव सर्वान्तर्यामी फलप्रद इति मत्स्वरूपमज्ञात्वेत्यर्थः । अतएव फलाल्पतेति भावः । "अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्" इति स्मृतेः ॥ ३ ॥ यस्मात्कारणान्मत्तः मत्सकाशान्न व्यतिरिच्यते तस्मादहमेव फलप्रदः ॥ ४ ॥ येनेति । उक्तलक्षणेन विष्णवाकारेण शिवाकारेण गणेशसूर्याद्याकारेण वा एकमेव मां य उपासते तेभ्यस्तेनैवाकारेण वाञ्छितं ददे प्रयच्छामि प्रसन्नः सन् ॥ ५ ॥ विधिनेति । विधिना सर्वान्तर्यामिदृष्ट्या । अविधिना तत्तद्देवतादृष्ट्या वापि । अत्र विधिशब्दस्यायमेवार्थः । यजन्त्यविधिपूर्वकमित्युक्तत्वात् ॥ ६ ॥ भक्तेर्माहात्म्यमाह—अपि चेदिति । पूर्वं सुतरां दुराचारोऽपि पश्चात्तापेन तप्तः सन् मां भजते । अनन्यभाक् एकनिष्ठः सः साधुरेव पुण्यवानेव मन्तव्यः । यतः कारणात्सः सम्यग्व्यवसितः, उत्तमनिश्चयवान् जात इत्यर्थः ॥ ७ ॥ स्वजीवत्वेनेति । त्वमेवाहं त्वत्प्रतिबिम्बत्वादिति मामेवैकं

उपासाविधयस्तत्र चत्वारः परिकीर्तिताः।
संपदारोपसंवर्गाध्यासा इति मनीषिभिः॥ ९॥
अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तनम्।
अनन्तं वै मन इति संपद्विधिरुदीरितः॥ १०॥
विधावारोप्य योपासा सारोपः परिकीर्तितः।
यद्वदोंकारमुद्गीथमुपासीतेत्युदाहृतः॥ ११॥
आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः।
योषित्यग्निमतिर्यत्तदध्यासः स उदाहृतः॥ १२॥

---

परिच्छेदत्रयशून्यं यो वेत्ति जानाति। य एवं वेद तमेव भजकमिति वार्थः। यद्वा शोधितत्वंपदार्थाभेदेन शोधिततत्पदार्थं यो ध्यायतीति। ब्रह्महत्यादिकान्यपि पापानि तं ज्ञानसंपन्नं न पश्यन्ति द्रष्टुमसमर्थानि यदा तदा तत्कृतो लेपः केति भावः। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति स्मृतेः॥ ८॥ उपासेति। तत्र ब्रह्मसाक्षात्कारे। तदर्थमिति यावत्। "निमित्तात्कर्मयोगे" इति सप्तमी। उपासाविधयः प्रकारा इत्यर्थः। चत्वारः मनीषिभिः परिकीर्तिताः वर्णिताः। संपत्, आरोपः, संवर्गः, अध्यास, इत्युपासनाश्चतुर्विधा इति निष्कर्षः॥ ९॥ अल्पस्येति। अल्पस्य परिच्छिन्नस्य मनसः अनन्तवृत्तिरूपगुणयोगादधिकत्वे सादृश्येन अनन्ता विश्वेदेवा इति यच्चिन्तनमसौ संपद्विधिः। तथाच प्रतीकोपासना द्विविधा संपदध्यासश्चेति। तत्रारोप्यप्रधाना संपत्। यथा सगुणमूर्तिचिन्तनम्। अधिष्ठानप्रधानोऽध्यासः। अधिष्ठानमुद्दिश्य आरोपितस्यापि ध्यानम्। यथा सगुणचिन्तनेऽपि निर्गुणब्रह्मानुसंधानम्॥ १०॥ विधाविति। विधीयते प्रधानविधिनेति विधिः। अङ्गमित्यर्थः। तस्मिन्नारोप्य या उपासना सा आरोपः। अङ्गावबद्धाध्यास इति यावत्। उद्गीथसाम्नः प्रथमभक्तिः "ॐकारमुद्गीथमुपासीत" इति॥ ११॥ आरोप इति। बुद्धिपूर्वेण। बुद्धिपूर्वकं ज्ञात्वेति यावत्। य आरोपः

क्रियायोगेन चोपासाविधिः संवर्ग उच्यते ।
संवर्तवायुः प्रलये भूतान्येकोऽवसीदति ॥ १३ ॥
उपसंगम्य बुद्ध्या यदासनं देवतात्मना ।
तदुपासनमन्तः स्यात्तद्बहिः संपदादयः ॥ १४ ॥
ज्ञानान्तरानन्तरितसजातिज्ञानसंततेः ।
संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १५ ॥

---

सोऽसौ उपासाविधिरध्यास इत्युदाहृतः । यथा योषिति अग्निमतिः "योषा वाव गौतमाग्निः" इति श्रुत्युक्तोऽर्थः । यद्यपि प्रागुक्ताङ्गावबद्धोपासनाप्यध्यास एवान्तर्भवति तथापि किंचिद्भेदाद्भेदः ॥ १२ ॥ क्रियायोगेनेति । क्रियायोगेन संवृङ्क्ते भूतानीति संवर्गः । सर्वभूतवशीकरणधुरीण इत्यर्थः । इयं संवर्गोपासा । तत्र दृष्टान्तः । प्रलये संवर्तनामा वायुर्यथा भूतान्यवसीदति अवसादयति स्वाधीनानि करोतीति । तद्वदयं संवर्ग इति भावः ॥ १३ ॥ उपसंगम्येति । बुद्ध्या गुरूपलब्धेन ज्ञानेन देवतायाः स्वस्य चाभेदरूपेण उप संगम्य देवतासमीपं गत्वा यदासनं अवस्थानं पूजार्थमिति शेषः । तत् अन्तः अन्तरङ्गभूतमुपासनं बोद्धव्यम् । संपदादयस्तु प्रागुक्तास्ततो बहिर्बहिरङ्गभूताः । ब्रह्मज्ञानपक्षे तु बुद्ध्या श्रवणादिजन्यया देवतात्मनोपसंगम्य ब्रह्माहमस्मीति विषयीकृत्य यदासनं ध्यानं तदन्तरङ्गमुपासनमिति योजनीयम् ॥ १४ ॥ कियत्कालमुपासनं विधेयमित्याकाङ्क्षायां तदवधिमाह—ज्ञानेति । ज्ञानान्तरेण विजातीयज्ञानेन शिवध्यानकाले कामिनीध्यानरूपेणेत्यर्थः । अनन्तरितानि मध्ये विच्छिन्नानि न भवन्तीत्येवंरूपाणि । अव्यवहितानीति यावत् । यानि सजातीयज्ञानानि तेषां संततेः । निदिध्यासनस्येत्यर्थः । उपासनं भावप्रधानो निर्देशः । उपासनत्वम् । संपन्नः स्वाभेदेन साक्षात्कृतो देवतात्मा येन तथात्वं उदीरितं कथितम् । साक्षात्कारपर्यन्तं निदिध्या-

संपदादिषु बाह्येषु दृढबुद्धिरुपासनम् ।
कर्मकाले तदङ्गेषु दृष्टिमात्रमुपासनम् ।
उपासनमिति प्रोक्तं तदङ्गानि ब्रुवे शृणु ॥ १६ ॥
तीर्थक्षेत्रादिगमनं श्रद्धां तत्र परित्यजेत् ।
स्वचित्तैकाग्रता यत्र तत्रासीत सुखं द्विजः ॥ १७ ॥
कम्बले मृदुतल्पे वा व्याघ्रचर्मणि वास्थितः ।
विविक्तदेशे नियतः समग्रीवशिरस्तनूः ॥ १८ ॥
अत्याश्रमस्थः सकलानीन्द्रियाणि निरुध्य च ।
भक्त्याथ स्वगुरुं नत्वा योगं विद्वांश्च योजयेत् ॥ १९ ॥

---

सनं कर्तव्यम् । "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणे स्पष्टमेतत् ॥१५॥ संपदादिष्विति । तत्र बुद्धेर्दार्ढ्यमेवावधिरित्यर्थः । सगुणनिर्गुणोभयविषयिणीरुपासनाः प्रागुक्ता उपसंहरति—उपासनमिति । अवध्युपसंहाररूपविषयभेदादुपासनशब्दावृत्तिः । तदङ्गानि उपासनाङ्गानि ॥१६॥ उपासनविधिं ब्रूहि । देशकालं त्विति रामेण पृष्टं तत्रोपासनं सविस्तरमुक्तम् । इदानीं उपासनायोग्यं देशमाह—तीर्थेति । शुद्धचित्तस्य किं तीर्थेनेति भावः । तर्हि कुत्रोपासनं विधेयं तदाह—स्वचित्तेति । स्वचित्तस्य यत्रैव एकाग्रता तत्रैवासीतेति । "यत्रैकाग्रता तत्र विशेषादासीनः संभवात्" इत्यधिकरणेषु स्पष्टमेतत् ॥ १७ ॥ कम्बले शुभ्रकम्बले चित्रकम्बले वा । मृदुतल्पे कार्पासोर्णवस्त्रासने व्याघ्रचर्मणि वास्थित उपविष्टः । विविक्तदेशे प्राकृतजनवर्जितस्थले । नियतो वशीत्यर्थः । समा ग्रीवा शिरश्च तनूश्च यस्य स तथा । "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः" इति स्मृतेः ॥ १८ ॥ अत्याश्रमस्थ इति विध्युक्तभस्मधारणमत्याश्रमः तेन युक्तः सन् यस्तिष्ठति सोऽत्याश्रमस्थ इत्युच्यते । तदुक्तं स्कान्दे ब्रह्मगीतायाम् "अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं तथा । त्रिपुण्ड्रधारणं चापि

यस्त्वविज्ञानवान्भवत्यव्यक्तमनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ २० ॥
विज्ञानिनस्तु भवति यत्नेन मनसा सह।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ २१ ॥
यस्त्वविज्ञानवान्भवत्यमनस्कः सदा शुचिः।
न स तत्पदमाप्नोति संसारमपि गच्छति ॥ २२ ॥
विज्ञानी यस्तु भवति समनस्कः सदा शुचिः।
स तत्पदमवाप्नोति यस्माद्भूयो न जायते ॥ २३ ॥

---

वदन्त्यत्याश्रमं बुधाः ॥" "अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य" इति कैवल्योपनिषदर्थ एव संगृहीतोऽस्ति। विद्वान् गुरुमुखादधीतयोगशास्त्रः सन् योगं चित्तवृत्तिनिरोधप्रयोजकीभूतप्राणवायुनिरोधं योजयेदभ्यसेत्। यथाच पतञ्जलिसूत्रे "योगश्चित्तवृत्तिनिरोधः" इति। तदङ्गानि "आसनं प्राणसंरोधः प्रत्याहारश्च धारणा। ध्यानं समाधिरेतानि योगाङ्गानि वदन्ति षट् ॥" इति। विस्तरस्तु पतञ्जलिसूत्रभाष्यादवगन्तव्यः ॥ १९ ॥ इत आरभ्य कठवल्ल्युपनिषदर्थः संगृहीतः यस्त्वविज्ञानवानित्यादिना। अविज्ञानवान् विवेकशून्यः। अतएवाव्यक्तेन मूढेन मनसोपलक्षितः ॥ २० ॥ विज्ञानिनस्तु पुरुषस्य यत्नेन वक्ष्यमाणं भवति। यद्भवति तदेवाह। मनसा सहेन्द्रियाणि तस्य वश्यानीति ॥ २१ ॥ यस्त्विति। अमनस्कश्चञ्चलचित्तः सदा शुचिर्बाह्याभ्यन्तरशौचवानपि विज्ञानरहितो न तत्पदमाप्नोति किंतु संसारमेव गच्छति प्राप्नोति। एवार्थस्त्वपिः ॥ २२ ॥ विज्ञानीति। यस्तु विज्ञानी विवेकी समनस्कः स्थिरचित्तो भवति सदा शुचिः शुद्धः स तत्पदमवाप्नोति। यस्मात्पदाच्चुतः सन् भूयो न जायते। संसारी न भवतीत्यर्थः

विज्ञानसारथिर्यस्तु मनःप्रग्रह एव च।
सोऽध्वनः पारमाप्नोति ममैव परमं पदम् ॥ २४ ॥
हृत्पुण्डरीकं विरजं विशुद्धं विशदं तथा।
विशोकं च विचिन्त्यात्र ध्यायेन्मां परमेश्वरम् ॥ २५ ॥
अचिन्त्यरूपमव्यक्तमनन्तममृतं शिवम्।
आदिमध्यान्तरहितं प्रशान्तं ब्रह्म कारणम् ॥ २६ ॥
एवं विभुं चिदानन्दमरूपमजमद्भुतम्।
शुद्धस्फटिकसंकाशमुमादेहार्धधारिणम् ॥ २७ ॥
व्याघ्रचर्माम्बरधरं नीलकण्ठं त्रिलोचनम्।
जटाधरं चन्द्रमौलिं नागयज्ञोपवीतिनम् ॥ २८ ॥
व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम्।
पराभ्यामूर्ध्वहस्ताभ्यां बिभ्राणं परशुं मृगम्।
भूतिभूषितसर्वाङ्गं सर्वाभरणभूषितम् ॥ २९ ॥

---

॥ २३ ॥ विज्ञानं सारथिर्यस्य, मनः प्रग्रहो रश्मिर्यस्य, अर्थात् इन्द्रियाणि हया यस्य, शरीरं रथो यस्य, एवंभूतः पुमान् अध्वनः संसारमार्गस्य पारं पारभूतं ममैव पदं स्वरूपमाप्नोति ॥ २४ ॥ हृत्पुण्डरीकमित्यादयः श्लोकाः प्रायः स्फुटार्था एव। विरजं रजोगुणकार्यकामादिरहितं अतएव विशुद्धं सत्वगुणकार्यशमादियुक्तं अतएव विशदं निर्मलं विशोकं तमोगुणकार्यरहितम्। एवं हृदयाम्भोजं विचिन्त्य अत्रास्मिन् हृत्पुण्डरीके परमेश्वरं मायालीलावतारं मां ध्यायेत् ॥ २५ ॥ अचिन्त्यरूपं अप्रतर्क्यस्वरूपं अव्यक्तमपरिच्छिन्नं अनन्तं निरतिशयं प्रशान्तं क्षोभरहितं अमृतं नाशरहितं शिवं कल्याणरूपं कारणं विवर्तरूपकार्यस्येति शेषः ॥ २६ ॥ एवं उक्तलक्षणं विभुं व्यापकं चिदानन्दं ज्ञानसुखस्वरूपं रूपरहितं अजं उत्पत्तिशून्यं अद्भुतं मायाश्चर्यतादात्म्यापन्नं सत् शुद्धस्फटिकेत्यादि-

एवमात्मारणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासात्साक्षात्पश्यति मां जनः ॥ ३० ॥
वेदवाक्यैरलभ्योऽहं न शास्त्रैर्नापि चेतसा।
ध्यानेन वृणुते यो मां सर्वदाहं वृणोमि तम् ॥ ३१ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेन लभेत माम् ॥ ३२ ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यः प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ३३ ॥
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्।
तज्ज्योतिर्लक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥३४॥

---

धर्मविशिष्टं न परमार्थतः ॥ २७ ॥ २८ ॥ २९ ॥ एवंभूतस्यात्मनः साक्षात्कारे श्रुत्युक्तं ध्यानमुपपादयन्नाह—एवमिति। आत्मैवारणिः तं कृत्वा तथा प्रणवमुत्तरारणिं च कृत्वा ध्यानमेव निर्मथनं तस्याभ्यासात् साक्षान्मां पश्यति ॥ ३० ॥ सगुणस्य निर्गुणस्य साक्षात्कारो ध्यानं विना शास्त्रपाण्डित्यमात्रेण न भवतीत्याह—वेदवाक्यैरिति। चेतसा बकवन्निगृहीतेन मनसा ॥ ३१ ॥ तस्माच्छ्रवणादिसध्रीचीनं ध्यानमेव कारणमित्याह—नाविरत इति। दुश्चरितात्पापाचरणादविरतोऽनलंबुद्धिः मां न लभेतेति प्रत्येकं संबन्धः। अशान्तो वितृष्णः। असमाहितः श्रवणादाविति शेषः। अशान्तमानसश्चञ्चलचित्तः। प्रज्ञानेन शास्त्रज्ञानमात्रेणेति सर्वत्र योजनीयम्। प्रत्युत शास्त्रज्ञानवत एते दुर्गुणाः प्रायः प्रादुर्भवन्तीति सूचितम् ॥ ३२ ॥ जाग्रदिति। जाग्रत्स्वप्नसुषुप्त्यादिः प्रपञ्चो यस्मिन्निति बहुव्रीहिः। अवस्थात्रयेऽपि साक्षितया यः प्रकाशमान इति यावत्। तद्ब्रह्माहमिति भागत्यागलक्षणयाऽखण्डार्थं ज्ञात्वावस्थितः सन् सर्वबन्धैः प्रमुच्यते। प्रपञ्चतादात्म्यापन्नो न भवतीति भावः ॥३३॥ त्रिष्विति। त्रिषु धामसु जाग्रत्स्वप्नसुषुप्तिषु यद्भोग्यं यश्च भोगः यश्च

कोटिमध्याह्नसूर्याभं चन्द्रकोटिसुशीतलम्।
सूर्यचन्द्राग्निनयनं स्मेरवक्त्रसरोरुहम्॥ ३५॥
एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा।
सर्वाध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च॥ ३६॥

---

भोक्ता इदं त्रयं ब्रह्मणि कल्पितम्। तथाहि यदनुविद्धानि यान्यवभासन्ते तत्र तानि परिकल्पितानि। यथायं सर्पोऽयं दण्ड इयं धारेति रज्ज्वा इदमंशेनानुविद्धतया भासमानाः सर्पादयस्तत्र परिकल्पिताः। सदनुविद्धं चेदं भोक्तृभोग्यभोगात्मकं जगदवभासते, अतो ब्रह्मणि सन्मात्ररूपे परिकल्पितम्। नच तस्य सन्मात्रस्यानवभासे तदनुबन्धेन कल्पितावभासः संभवति। अतः स्वप्रकाशतया तदेव चिन्मात्रस्वरूपं तदेव वस्तु। तथाच श्वेताश्वतरश्रुतिः "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति। यावद्ब्रह्म न जानाति तावत्प्रेरयिता भोगप्रद ईश्वरः, भोक्ता जीवः भोग्यं जगदिति विभागः। ब्रह्म मत्वा तु स्थितस्य एतत्त्रिविधं ब्रह्मैव भवतीति तदर्थः। एवं यश्चिन्मात्रः साक्षी स्वयंप्रकाशः सदाशिवः सोऽहमिति योजना॥ ३४॥ एवं तत्त्वमस्यादिश्रुतिसिद्धमखण्डार्थं प्रतिपाद्य सोपाधिकस्य निरुपाधिकेन सह भेदान्मन्दाधिकारिणमुद्दिश्य पुनः सोपाधिकस्य ध्यानायनमेव विशिनष्टि—कोटिमध्याह्नेति। स्मेरं विकसन्मुखकमलं यस्येत्यर्थः। कोटिमध्याह्नसूर्याभमित्यनेन तापकारित्वं प्राप्तं व्यावर्तयति—चन्द्रकोटीति। एवंविधं ध्यात्वा सर्वबन्धैः प्रमुच्यत इति पूर्वेणान्वयः॥ ३५॥ यदुक्तं सोपाधिकस्य निरुपाधिकेन सहाभेद इति तदेव प्रतिपादयितुं श्रुतीः श्लोकतः संगृह्णाति—एको देव इति। स्पष्टम्॥ ३६॥

एको वशी सर्वभूतान्तरात्मा-
प्येकं बीजं नित्यदा यः करोति ।
तं मां नित्यं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ३७ ॥
अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥ ३८ ॥
वेदेह मां यः पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
स एव विद्वानमृतोऽत्र भूया-
न्नान्यः पन्था अयनाय विद्यते ॥ ३९ ॥

---

एक इति। यः सृष्टेः पूर्वं एक एवासीत्। "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतेः। सएव सृष्टेरनन्तरं सर्वेषां भूतानामन्तरात्माप्येकं बीजं मायाख्यं नित्यदा करोति। स्वसत्तानुविद्धतया सत्तावत्करोतीत्यर्थः। तं मां कर्तारमप्यकर्तारं ये शास्त्राचार्योपदेशमनुसृत्य पश्यन्ति साक्षात्कुर्वन्ति तेषां शाश्वती शान्तिः कैवल्यरूपा मुक्तिः नेतरेषां भेदज्ञानिनाम् ॥ ३७ ॥ अग्निरिति। अग्निर्यथा भुवनं लोहादिदाह्यं प्रविष्टस्तदुपाधिवशात्तद्वच्चतुष्कोणदीर्घवक्रसरलत्वाद्याकारं भजेदिति "रूपं रूपं प्रतिरूपो बभूव" इत्यस्यार्थः। यथा एकः सर्वभूतान्तरात्मा तत्तदुपाधिभेदाद्भिन्नतया प्रतीयमानोऽपि लोकदुःखेन न लिप्यते। यतोऽयं बाह्यः। लोकस्य कल्पितत्वेन मिथ्यात्वात्तल्लक्षणश्च इत्यर्थः ॥ ३८ ॥ वेद इति। इह संसारे यः विद्वान् ज्ञानी मां पुरुषं सर्वान्तर्यामिणं महान्तं व्यापकं आदित्यवर्णं स्वप्रकाशं तमसः प्रकृतेः परं स्वात्मत्वेन वेद स एवात्र संसारे

हिरण्यगर्भं विदधामि पूर्वं वेदांश्च तस्मै प्रहिणोमि योऽहम्।
तदेवमीड्यं पुरुषं पुराणं निश्चित्य मां मृत्युमुखात्प्रमुच्यते ४०
एवं शान्त्यादियुक्तः सन्वेत्ति मां यस्तु तत्त्वतः।
निर्मुक्तदुःखसंतानः सोऽन्ते मय्येव लीयते ॥ ४१ ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु श्रीराघवसंवादे उपासनाप्रपञ्चयोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः १३

सूत उवाच।

एवं श्रुत्वा कौसलेयस्तुष्टो मतिमतां वरः।
पप्रच्छ गिरिजाकान्तं सुभगं मुक्तिलक्षणम् ॥ १ ॥

राम उवाच।

भगवन्करुणाविष्टहृदय त्वं प्रसीद मे।
स्वरूपलक्षणं मुक्तेः प्रब्रूहि परमेश्वर ॥ २ ॥

---

अमृतो मुक्तो भूयाद्भवति। स्वात्मज्ञानं विना अयनाय मोक्षायान्यः पन्था नास्तीत्यर्थः ॥ ३९ ॥ हिरण्यगर्भं ब्रह्माणं विदधामि सृजामि। प्रहिणोम्युपदिशामि। ईड्यं वरेण्यं निश्चित्य स्वात्मत्वेन ज्ञात्वा ॥ ४० ॥ उपसंहरति—एवमिति। संतानं परम्परा। लीयते उपाधिनाशान्मत्स्वरूपो भवतीत्यर्थः ॥ ४१ ॥ इति श्रीशिवगीताटीकायां हरिदीक्षितविरचितायां बालानन्दिन्यां द्वादशोऽध्यायः ॥ १२ ॥

एवमुपासाविधिश्रवणानन्तरं रामः किं पृष्टवानिति विवक्षून्मुनीन्प्रति सूत आह—एवं श्रुत्वेति। सुभगं शोभनम् ॥ १ ॥ पूर्वाध्यायान्ते सोऽन्ते मय्येव लीयत इति सामान्यतो मुक्तिस्वरूपं श्रुत्वा विस्तरतः शुश्रूषू राम उवाच—भगवन्निति। स्वरूपमेव लक्षणं स्व-

श्रीभगवानुवाच।

सालोक्यमपि सारूप्यं सार्ष्ट्यं सायुज्यमेव च।
कैवल्यं चेति तां विद्धि मुक्तिं राघव पञ्चधा ॥ ३ ॥
मां पूजयति निष्कामः सर्वदा ज्ञानवर्जितः।
स मे लोकं समासाद्य भुङ्क्ते भोगान्यथेप्सितान् ॥ ४ ॥
ज्ञात्वा मां पूजेद्यस्तु सर्वकामविवर्जितः।
मया समानरूपः सन्मम लोके महीयते ॥ ५ ॥
इष्टापूर्तादिकर्माणि मत्प्रीत्यै कुरुते तु यः।
यत्करोति यदश्नाति यज्जुहोति ददाति यत् ॥ ६ ॥

---

रूपलक्षणं, यद्वा स्वरूपं लक्षणं च ॥ २ ॥ एवं पृष्टः श्रीभगवान् स्वरूपमुक्तिं विवक्षुरादौ विद्याकर्मजन्याः सातिशयमुक्तीराह—सालोक्यमिति। सलोकस्य भावः सालोक्यं। एकलोकवास इति यावत्। सारूप्यं समानरूपत्वं, सार्ष्ट्यं समानैश्वर्यं, ऋष्टिः खड्गः तेन चैश्वर्यं लभ्यते। सह युङ्क्ते व्यवहरतीति सयुक् सयुजो भावः सायुज्यम्। भूतावेशन्यायेन हिरण्यगर्भादिदेहभोग इत्यर्थः। तदप्राप्तिरेव सायुज्यशब्दार्थ इत्यपि केचित्। अत्र चतुष्टये मुक्तिशब्दो गौणः। इदानीं मुख्यमुक्तिमाह—कैवल्यमिति। केवलस्य भावः कैवल्यं इति गौणमुख्यभेदेन पञ्चधा तां मुक्तिं विद्धि। तत्तच्छब्दनिर्वचनेनैव जानीहि। तथाच पृथक्पृथग्लक्षणं न वक्तव्यमिति भावः ॥ ३ ॥ सालोक्यमुक्तिप्रापकमाह—मामिति। ज्ञानवर्जितः मत्स्वरूपानभिज्ञः तथापि मां शिवलिङ्गादौ पूजयति यः स सालोक्यं यातीत्यर्थः ॥ ४ ॥ ज्ञात्वेति। मत्स्वरूपं ज्ञात्वा ईश्वरो दयालुर्देवश्रेष्ठ इत्याद्येवं ज्ञात्वेत्यर्थः। सर्वकामैः क्षुद्रकामैर्वर्जितः ॥ ५ ॥ सायुज्यप्रापकं कर्माह श्लोकद्वयेन। मया तुल्यं प्राभवं भोगादिसामर्थ्यं नतु जगत्कर्तृ-

यत्तपस्यति तत्सर्वं यः करोति मदर्पणम् ।
मल्लोके स श्रियं भुङ्क्ते मत्तुल्यं प्राभवं भजन् ॥ ७ ॥
यस्तु शान्त्यादियुक्तः सन्मामात्मत्वेन पश्यति ।
स जायते परं ज्योतिरद्वैतं ब्रह्म केवलम् ।
अतः स्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥ ८ ॥
सत्यं ज्ञानमनन्तं यदानन्दं ब्रह्म केवलम् ।
सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥ ९ ॥

---

त्वादि । तथात्वे केनेश्वरताप्रसक्तिः स्यात् । अतएव "जगद्व्यापारवर्जम्" इति सूत्रम् ॥ ६ ॥ ७ ॥ परममुक्तिप्रापकमाह—यस्त्विति । शान्त्यादिशब्देन साधनचतुष्टयानन्तरं श्रवणमनननिदिध्यासनसंयुक्तः सन्नित्यर्थः । मामात्मत्वेन पश्यति । ननु प्रत्यग्ब्रह्मणोरन्योप्यतादात्म्याङ्गीकारे सति नाखण्डैकरसत्वं सिध्यति । नीलमुत्पलं इत्यत्र सत्यपि तादात्म्ये गुणद्रव्यकृतभेदस्यापि सत्त्वात् । एवमत्राप्यात्मत्वब्रह्मत्वकृतो भेदोऽपि प्रसज्येतेति चेन्न । गुणद्रव्ययोः परस्परव्यभिचारेण वैषम्यात् नीलगुणो मेघादावपि वर्तमान उत्पलं व्यभिचरति । उत्पलद्रव्यमपि शुक्लरक्तोत्पलयोर्वर्तमानत्वात् नीलगुणं द्रव्यं व्यभिचरति । अतस्तत्रार्थभेदान्नाखण्डार्थत्वम् । इह त्वात्मब्रह्मणोः परस्परव्यभिचाराभावादेकार्थत्वे सत्यखण्डत्वम् । तदुक्तम्—"नात्मता ब्रह्मणोऽन्यत्र ब्रह्मता नात्मनोऽन्यतः । तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम् ॥" इति । एवं मामात्मत्वेन पश्यति सः परब्रह्मज्योतिः स्वप्रकाशमद्वैतं द्वैतभ्रमरहितं जायते । नहि भ्रमहेतावविद्यायां निवृत्तायां निर्हेतुको भ्रमः संभवति । अतः स्वरूपेणावस्थानं मुक्तिशब्दार्थः । इयमेव परममुक्तिः । "ब्रह्मविद्ब्रह्मैव भवति" इति श्रुतेः ॥ ८ ॥ कीदृशं ब्रह्म भवतीत्याशङ्क्याह—सत्यमिति । उपदेशकाले अतद्व्यावृत्त्यर्थं सत्यत्वादयो धर्मा ब्रह्मणि अङ्गीकृताः ।

सजातीयविजातीयपदार्थानामसंभवात्।
अन्तस्तद्व्यतिरिक्तानामद्वैतमिति संज्ञितम्॥ १०॥
मत्वा रूपमिदं राम शुद्धं यदभिधीयते।
मय्येव दृश्यते रूपं जगत्स्थावरजंगमम्॥ ११॥
व्योम्नि गन्धर्वनगरं यथा दृष्टं न दृश्यते।
अनाद्यविद्यया विश्वं सर्वं मय्येव कल्प्यते॥ १२॥
मम स्वरूपज्ञानेन यदा विद्या प्रणश्यति।
तदैक एव वर्तेऽहं मनोवाचामगोचरः॥ १३॥

---

वस्तुतः तस्य ज्ञानादिस्वरूपमेव वाचामगोचरं मुख्यया वृत्त्येति प्राक् प्रपञ्चितम्॥ ९॥ सजातीयेति। तद्व्यतिरिक्तानां। ब्रह्मव्यतिरिक्तानामित्यर्थः। सजातीयविजातीयपदार्थानामसंभवात् तेषामन्तः। अभावस्वरूपमित्यर्थः। अयमाशयः। अद्वैतमिति यत्संज्ञितं तत् अन्त इत्यन्वयः। अद्वैतमिति तावद्द्वैतविरहरूपं तद्विशिष्टं वा बोध्यते। उभयथापि न विरोधः। भावस्वरूपस्यापि घटस्य प्रागभावाभावस्वरूपत्ववदभावस्वरूपस्यापि ब्रह्मणः प्रपञ्चाभावस्वरूपत्वमिति। विशिष्टत्वपक्षे नह्यभावेनाद्वैतत्वं व्याहन्यते। भावाद्वैतस्यैवाङ्गीकारात्॥ १०॥ यदिदं शुद्धरूपमभिधीयते श्रुतिभिर्लक्षणयेति शेषः। हे राम, तत् मत्वा स्वात्मत्वेन ज्ञात्वा ब्रह्मैव भवतीति शेषः। स्वस्मिन्नध्यारोपस्यापवादमाह—मय्येवेति। रूप्यत इति रूपं अविद्याकार्यं स्थावरजंगमात्मकं जगद्दृश्यते॥ ११॥ व्योम्नि गन्धर्वनगरं यथा दृष्टमपि न दृश्यते मिथ्याप्रतीयते तद्वद्विश्वं मयि तिष्ठति॥ १२॥ मयेति। निरुपाधिकमत्स्वरूपज्ञानेनेत्यर्थः। यदा जीवेश्वरभेदविधायिनी अविद्या प्रणश्यति तदा एक एवाहं वर्ते। मनोवाचामगोचर इत्यनेन सर्ववृत्तिशून्यता प्रदर्शिता॥ १३॥

सदैव परमानन्दः स्वप्रकाशश्चिदात्मना ।
न कालः पञ्चभूतानि न दिशो विदिशश्च न ॥ १४ ॥
मदन्यं नास्ति यत्किंचित्तदा वर्तेऽहमेकलः ॥ १५ ॥
न संदृशे तिष्ठति मे स्वरूपं न चक्षुषा पश्यति मां तु कश्चित् ।
हृदा मनीषा मनसाभिक्लृप्तं ये मां विदुस्ते ह्यमृता भवन्ति १६

श्रीराम उवाच ।

कथं भगवतो ज्ञानं शुद्धं मर्त्यस्य जायते ।
तत्रोपायं हर ब्रूहि मयि तेऽनुग्रहो यदि ॥ १७ ॥

---

सदेति । यद्यप्यहं सदा परमानन्दादिरूप एव तथापि कालपञ्चभूतदिगादिभिन्नं सर्वमधिष्ठानं साक्षात्कारेण बाध्यते । तदा एकएव वर्ते । अन्यदा तु जडेन विशिष्ट इति मोक्षसंसारदशयोर्वैलक्षण्योपपत्तिः ॥ १४ ॥ १५ ॥ निर्गुणं ब्रह्म लक्षणेनोपनिषद्भिः प्रतिपाद्यत इत्याह—न संदृश इति । कठश्रुतिमेव श्लोकतः संगृह्णाति । संदृशे सम्यक् द्रष्टुं मे मम स्वरूपं नीलपीतह्रस्वदीर्घाद्याकारं न तिष्ठति न विद्यते । अतएव कश्चिदपि ब्रह्मादिर्जीवः चक्षुषा मां न पश्यति । यथा रूपराहित्याच्चक्षुरविषयत्वं तथा शब्दादिराहित्याच्छ्रोत्राद्यविषयत्वं कठश्रुत्यैवोक्तम् "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च" इति । कथं तर्हि द्रष्टव्यस्त्वमित्याकाङ्क्षायामाह—हृदेति । हृत्स्था या मनीषा श्रवणात्मिका तया बुद्ध्या । "सुपां सुलुक्" इति डादेशः । मनसा मननेन अभिक्लृप्तमभिप्रकाशितं निदिध्यासितमिति यावत् । ईदृशं मां विदुः साक्षात्कुर्वन्ति ते अमृता भवन्ति । तथाच शब्दादप्यपरोक्षज्ञानं भवतीति भावः ॥ १६ ॥ एवमुक्तब्रह्मसाक्षात्कारस्य दुःशकत्वमाशङ्कमानः पृच्छति—कथमिति । भगवतः

श्रीभगवानुवाच।

विरज्य सर्वभूतेभ्य आविरिञ्चिपदादपि।
घृणां वितत्य सर्वत्र पुत्रमित्रादिकेष्वपि ॥ १८ ॥
श्रद्धालुर्मोक्षशास्त्रेषु वेदान्तज्ञानलिप्सया।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ १९ ॥
सेवाभिः परितोष्यैनं चिरकालं समाहितः।
सर्ववेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ २० ॥
सर्ववेदान्तवाक्यानामपि तात्पर्यनिश्चयम्।
श्रवणं नाम तत्प्राहुः सर्वे ते ब्रह्मवादिनः ॥ २१ ॥

---

शुद्धं निरुपाधिकम् ॥ १७ ॥ एवं पृष्टो भगवानाह—विरज्येति। आविरिञ्चिपदात् ब्रह्मलोकमभिव्याप्येत्यर्थः। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इति श्रुतेः। घृणां जुगुप्साम् ॥ १८ ॥ श्रद्धालुरिति। लिप्सया इच्छया श्रद्धालुः विश्वासवान् उपायनं समिदादि तद्युक्तकरः। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेः ॥ १९ ॥ सेवाभिरिति। चिरकालं सेवाभिर्जलाहरणवस्त्रक्षालनगोरक्षणपादसंवाहनादिरूपाभिरेनं गुरुं परितोष्य तोषं गमयित्वा समाहितोऽप्रमत्तः सर्ववेदान्तवाक्यार्थं अवान्तरतात्पर्यमहातात्पर्याभ्यां शृणुयात्। वाक्यार्थावबोधे गुरुप्रसाद एव कारणमिति भावः। "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेः। "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति स्मृतेश्च ॥ २० ॥ सर्ववेदान्तेति। वेदान्तवाक्यानामुपक्रमादिभिस्तात्पर्यग्राहकैः षड्भिर्लिङ्गैर्विशुद्धे ब्रह्मणि तात्पर्यनिर्णयानुकूलो मानसव्यापारः श्रवणशब्दार्थः। अतएव ज्ञानविधिं निराकुर्वतामपि श्रवणविध्यभ्युपगमो न विरुध्यते। तात्पर्यं तु तत्प्रतीतीच्छयोच्चरितत्वं तत्प्रतीति-

लोहमण्यादिदृष्टान्तैर्युक्तिभिर्यद्विचिन्तनम्।
तदेव मननं प्राहुर्वाक्यार्थस्योपबृंहणम् ॥ २२ ॥
निर्ममो निरहंकारः समः सङ्गविवर्जितः।
सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥ २३ ॥
यत्सदा ध्यानयोगेन तन्निदिध्यासनं स्मृतम् ॥ २४ ॥
सर्वकर्मक्षयवशात्साक्षात्कारोऽपि चात्मनः।
कस्यचिज्जायते शीघ्रं चिरकालेन कस्यचित् ॥ २५ ॥
कूटस्थानीह कर्माणि कोटिजन्मार्जितान्यपि।
ज्ञानेनैव विनश्यन्ति नतु कर्मायुतैरपि ॥ २६ ॥
ज्ञानादूर्ध्वं तु यत्किंचित्पुण्यं वा पापमेव वा।
क्रियते बहु वाप्यल्पं न तेनायं विलिप्यते ॥ २७ ॥

---

जनकत्वं वा ॥ २१ ॥ लोहेति। लोहमण्यादिदृष्टान्ताः श्रुतिषु प्रसिद्धा वेदितव्याः ॥ २२ ॥ २३ ॥ यत्सदेति। ध्यानयोगेन तद्रूपेणोपायेनेत्यर्थः। "योगः संनहनोपायध्यानसंगतियुक्तिषु" इत्यमरः। आत्मनि बुद्धावात्मानं सच्चिदानन्दस्वरूपमीक्षते यत्तद्ध्यानं निदिध्यासनं स्मृतमित्यर्थः। विजातीयवृत्त्यभावेन सजातीयवृत्तिधारणं निदिध्यासनशब्दार्थः ॥ २४ ॥ कृतेऽपि निदिध्यासने प्रतिबन्धकसद्भावाभ्यां साक्षात्कारविलम्बौ प्रतिपादयति—सर्वकर्मेति। ज्ञानोत्पत्त्या बन्धकर्मणां क्षयवशाच्छीघ्रं कस्यचिदात्मसाक्षात्कारो जायते। प्रतिबन्धकसद्भावे तु विलम्बेनेत्यर्थः ॥ २५ ॥ कूटस्थानीति। कूटस्थानि अनारब्धकार्याणि कोटिजन्मभिरर्जितान्यपि ज्ञानेनैव विनश्यन्ति। कर्मणां श्रौतस्मार्तादीनामयुतैरपि अनेककर्मानुष्ठानैरपि न नश्यन्तीत्यर्थः। "यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन" इति स्मृतेः। "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति श्रुतिर्ज्ञानादन्यत्र कर्मक्षयाभावे मानम्। अनेन सर्वेषां संचितकर्मणां ज्ञाननाश्यत्वमुक्तम् ॥ २६ ॥ ज्ञानादूर्ध्वमिति। पुण्यं पुण्य-

शरीरारम्भकं यत्तु प्रारब्धं कर्म जन्मिनः ।
तद्भोगेनैव नष्टं स्यान्नतु ज्ञानेन नश्यति ॥ २८ ॥
निर्मोहो निरहंकारो निर्लेपः सङ्गवर्जितः ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यः पश्यन्संचरत्येष जीवन्मुक्तोऽभिधीयते ॥ २९ ॥
अहिनिर्ल्वयनी यद्वद्द्रष्टुः पूर्वं भयप्रदा ।
ततोऽस्य न भयं किंचित्तद्वद्द्रष्टुरयं जनः ॥ ३० ॥

---

साधनं विहितं कर्मेत्यर्थः । पापं पापसाधनं निषिद्धं कर्मेत्यर्थः । यत् ज्ञानिनाल्पं बहु वा क्रियते तेन कर्मणा अयं ज्ञानी न लिप्यते ॥ २७ ॥ शरीरारम्भकमिति । जन्मिनो देहिनोऽपि ज्ञानिनः यत्प्रकृतशरीरारम्भकं प्रारब्धं कर्मोच्यते तत्तु भोगेनैव नष्टं स्यात् । क्षीयत इत्यर्थः । नतु ज्ञानेन नश्यति । अत्र प्रमाणानि—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" । "तस्य तावदेव चिरं" इति । "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापकर्म न श्लिष्यते" इति ॥ २८ ॥ ननु निदिध्यासनस्यात्मसाक्षात्कारहेतुत्वे कृतनिदिध्यासनानामपि केषांचित्साक्षात्कारानुपपत्तिः कथं समर्थयितव्येत्याशङ्क्याह—निर्मोह इति । निर्गतो मोहोऽविवेको यस्मात्स तथा । विवेकसंपन्न इत्यर्थः । निरहंकारः देहाध्यासरहितः । निर्लेप आसक्तिरहितः । सङ्गः स्त्रीपुत्राद्यध्यासस्तेन वर्जितः तदुक्तं बृहन्नारदीये—"यान्यान्हि कुरुते जन्तुः संबन्धान्मनसः प्रियान् । त एवास्य निखन्यन्ते हृदये शोकशङ्कवः" इति । सर्वभूतेषु चात्मानमनुस्यूतं तथा सर्वभूतानि चात्मनि अध्यस्तानि यः पश्यन्संचरति एष जीवन्मुक्त इत्यभिधीयते । निर्मोह इत्यादिना निवृत्तमायावरण इत्यर्थः सूचितः । संचरतीति यावत्प्रारब्धं विक्षेपानुवृत्तिः सूचिता । "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतेः ॥ २९ ॥ अहिनिर्ल्वयनीति । अहेः सर्पस्य निर्ल्वयनी त्वक् कंचुकापरपर्याया । सा यथा

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य वशं गताः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ ३१ ॥
मोक्षस्य नहि वासोऽस्ति न ग्रामान्तरमेव वा ।
अज्ञानहृदयग्रन्थिनाशो मोक्ष इति स्मृतः ॥ ३२ ॥
वृक्षाग्रच्युतपादो यः स तदैव पतत्यधः ।
तद्वज्ज्ञानवतो मुक्तिर्जायते निश्चितापि तु ॥ ३३ ॥

---

द्रष्टुर्जनस्य पूर्वं सर्पशरीरावस्थानदशायां भयप्रदा भवति ततः सर्पशरीरत्यागानन्तरं अस्य द्रष्टुस्तस्याः सकाशात्किमपि भयं न भवति तद्वदयं जीवन्मुक्तः पूर्वं येषां भयप्रद आसीत्तेषामपि सांप्रतं भयप्रदो नेत्यर्थः । "तद्यथाहिनिर्ल्वयनी वल्मीके" इत्यादिबृहदारण्यकश्रुतेः । तदुक्तं स्कान्दे "त्यक्त्वा त्वचं पुनः सर्पः स्वात्मत्वेन न पश्यति । तथा विद्वान्न देहादिमात्मत्वेनाध्यवस्यति ॥" इति ॥ ३० ॥ विरज्य सर्वभूतेभ्य इत्यारभ्य एतावत्पर्यन्तं क्रमिकाणि साधनान्युपन्यस्तानि । तेषु वैराग्याख्यं साधनमेव दुर्लभतरं, तस्मिन् सिद्धे उत्तरोत्तरसाधनानि जातप्रायाणीत्याशयेनाह—यदेति । वासना एव कामशब्दार्थः अस्य वशं गताः । हृदि विद्यमाना इत्यर्थः । अथ वासनाक्षयसमनन्तरमेव मर्त्यः अमृतो भवति । अनुशासनं शिक्षा । किंबहुनोक्तेन वैराग्यविधुरस्य वेदान्तपाण्डित्यं वणिग्वृत्तिरेवेति भावः ॥ ३१ ॥ वैराग्यपूर्वकं ज्ञानोत्पत्तौ सत्यां न मोक्षे विलम्ब इत्याह—मोक्षस्येति । मोक्षस्य वासोऽवस्थानं नास्ति कैलासवैकुण्ठादाविति शेषः । ग्रामाद्ग्रामान्तरं प्रति गमनं यथा तथा मोक्षस्य गमनं नास्ति । तर्हि को नाम मोक्षस्तत्राह । अज्ञानं तत्कार्यं हृदयग्रन्थिरहमिति तादात्म्याध्यासरूपश्च । तयोर्नाश एव मोक्ष इत्यर्थः ॥ ३२ ॥ तत्र दृष्टान्तमाह—वृक्षाग्रेति । यथा वृक्षाग्रात् च्युतपादस्य भूमिप्राप्तौ न विलम्बस्तथा ज्ञानिनो मुक्तावपि न विलम्ब इति भावः ॥ ३३ ॥

तीर्थे चाण्डालगेहे वा यदि वा नष्टचेतनः।
परित्यजन्देहमेवं ज्ञानादेव विमुच्यते ॥ ३४ ॥
संवीतो येनकेनाश्नन्भक्ष्यं वाऽभक्ष्यमेव वा।
शयानो यत्र कुत्रापि सर्वात्मा मुच्यतेऽत्र सः ॥ ३५ ॥
क्षीरादुद्धृतमाज्यं यत्क्षिप्तं पयसि तत्पुनः।
न तेनैवैकतां याति संसारे ज्ञानवांस्तथा ॥ ३६ ॥
नित्यं पठति योऽध्यायमिमं राम शृणोति वा।
स मुच्यते देहबन्धादनायासेन राघव ॥ ३७ ॥
ततः संशयचित्तस्त्वं नित्यं पठ महीपते।
अनायासेन तेनैन सर्वथा मोक्षमाप्स्यसि ॥ ३८ ॥

इति श्रीपद्मपुराणे शिवगीता० मोक्षनि० त्रयोदशोऽध्यायः ॥ १३ ॥

---

तीर्थे इति। तीर्थे वा भवतु चाण्डालगेहे वा उभयथाप्यविशेष इति भावः। तथा यदि वा नष्टचेतनः ब्रह्माकारवृत्तिशून्यः, यदि वा तद्वान् देहं परित्यजन् एवं येन केनापि प्रकारेण जीवन्मुक्तश्चरमदेहपातानन्तरं ब्रह्मैव भवतीति भावः। आवरणस्य तु पूर्वमेव निवृत्तत्वात्, विक्षेपस्य तु देहपातावधिकत्वाच्च "तस्य तावदेव चिरम्" इत्यादिश्रुतेश्च तीर्थादिमरणं पुण्यसाधनं चाण्डालगेहादिमरणं पापसाधनमिति व्यवस्थेयमज्ञजनविषयिण्येव न ज्ञानिविषयिणीति दिक्॥३४॥ जीवन्मुक्तस्य स्थितिमाह—संवीत इति। येन केनोत्तमेनाधमेन वा वस्त्रेण संवीतः संवृतः तथा भक्ष्यमभक्ष्यं वाश्नन् यत्र कुत्रापि वा शयानः स जीवन्मुक्तः। अत्र प्रारब्धक्षये सति मुच्यते। इदं लोकदृष्ट्योक्तम्। यतोऽसौ सर्वात्मा प्रपञ्चाधिष्ठानं तस्य मोक्ष इत्युपचारमात्रमिति भावः ॥ ३५ ॥ जीवन्मुक्तावस्थायां बाधितानुवृत्त्या देहादिसंसारं पश्यन्नपि पूर्ववत्तेन न लिप्यत इत्यस्मिन्नर्थे लौकिकं दृष्टान्तमाह—क्षीरादिति ॥ ३६ ॥ ३७ ॥ तत इति। असंभावना-

## चतुर्दशोऽध्यायः १४

श्रीराम उवाच।

भगवन्यदि ते रूपं सच्चिदानन्दविग्रहम्।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्॥ १॥
सर्वधर्मविहीनं च मनोवाचामगोचरम्।
सर्वव्यापितयात्मानमीक्षते सर्वतः स्थितम्॥ २॥
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम्।
अमूर्तं सर्वभूतात्माकारं कारणकारणम्॥ ३॥

---

दिभिः संदिहानचित्तस्त्वं नित्यमिमं मोक्षसाधनीभूतक्रममनुष्ठातुमसमर्थश्चेत्तर्हीममध्यायं नित्यं पठ। तेनैव मोक्षमाप्स्यसि। कालान्तरेणोक्तसाधनसंपन्नः सन्नित्यर्थः। रामं निमित्तीकृत्य लोकानुग्रहार्थमयं गीतोपदेशो नतु रामं प्रति। तस्य ब्रह्मरूपत्वादिति हृदयम्॥३८॥
इति श्रीलक्ष्मीनरहरिसूनुविरचितायां शिवगीताटीकायां बालानन्दिन्यां मोक्षयोगो नाम त्रयोदशोऽध्यायः॥ १३॥

एवं महता प्रबन्धेन ब्रह्मसाक्षात्कारसाधनानि प्रतिपादितानि तानि श्रुत्वा पुनरुपायान्तरमाकाङ्क्षमाणः श्रीराम आह—भगवन्निति। यदीत्यस्य यद्यपीत्यर्थः। हे भगवन्, ते रूपं सच्चिदानन्दात्मकं निष्कलं अवयवरहितं निष्क्रियं उत्क्षेपणादिपञ्चविधकर्मरहितं अतएव शान्तं निस्तरङ्गसमुद्रसदृशम्। निरवद्यं निर्दोषम्। "अपापविद्धम्" इति श्रुतेः। निरञ्जनं निःसङ्गम्॥ १॥ सर्वधर्मविहीनं धर्मधर्मिकल्पनाया अविद्यामूलकत्वात्। अतएव मनोवाचामगोचरं सर्वतः स्थितं आत्मानं बिम्बभूतं त्वां प्रति यथावत् ईक्षते प्रकाशते। सर्वव्यापितया सर्वत्रानुस्यूततयेत्यर्थः। तव मायोपहितत्वेऽप्यनावृतस्वरूपत्वादिति भावः॥ २॥ अनावृतस्वरूपस्य बिम्बीभूतस्येश्वरस्य तव यत्सर्वदा प्रत्यक्षं तद्वस्तु कीदृशं तदाह—आत्मेति। आत्मविद्या च

यत्तदद्रेश्यमग्राह्यं तद्ग्राह्यं वा कथं भवेत्।
अत्रोपायमजानानस्तेन भिन्नोऽस्मि शंकर ॥ ४ ॥

श्रीशिव उवाच।

श्रृणु राम प्रवक्ष्यामि तत्रोपायं महाभुज।
सगुणोपासनाभिस्तु चित्तैकाग्र्यं विधाय च।
स्थूलसौराम्भिकान्यायात्तत्र चित्तं प्रवर्तयेत् ॥ ५ ॥

---

तपश्च तदभयं मूलं साधनं यस्मिन् तत्। सर्वेषां जीवानां परोक्षत्वात् ब्रह्म निरतिशयवृद्धिमत्। उपनिषदां परं महातात्पर्यविषयीभूतं अमूर्तं अपरिच्छिन्नं सर्वे भूतात्मानो जीवा आकारा अंशा इवांशा यस्य तत्तथा। "तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतेः। सर्वेषां कारणानां मायादीनामपि करणं सत्ताप्रदत्वात् ॥ ३ ॥ यत्तदिति। यद्ब्रह्म अद्रेश्यं अदृश्यमित्यर्थः। तथा अग्राह्यं दुर्विज्ञेयं एतादृशं तत्कथं वा ग्राह्यं भवेत्। तव तु बिम्बरूपस्यानावृतस्वरूपत्वात् तद्ब्रह्म प्रत्यक्षमेव सदास्ति। अत्रातिसूक्ष्मे दुर्विज्ञेये ब्रह्मणि कथं चित्तं प्रवर्तितव्यमिति उपायमजानानस्तेन कारणेन भिन्नोऽस्मि। अविद्याप्रयुक्तभेदवान्सन्व्याकुलस्तिष्ठामीति भावः ॥ ४ ॥ तत्रोपायं विवक्षुः शिव आह—शृण्विति। सगुणस्य ममोपासनाभिराराधनाभिस्तत्र दुर्विज्ञेयवस्तुनि स्थूलसौराम्भिकान्यायेन चित्तं प्रवर्तयेदित्यन्वयः। सूरस्येमे सौरा मरीचयस्तेष्वध्यस्तस्थम्भः सौराम्भः तस्याख्यानं सौराम्भिका। तत्करोतीति आख्यानार्थकणिजन्ताद्धात्वर्थनिर्देशे ण्वुच्। इक्षुभक्षिकेत्यादिवत्। उक्तन्यायस्त्वित्थम्। यथा तृषार्तं दृष्ट्वा प्रथमं मृगजलमिदमेव जलमिति दर्शयित्वा तावद्दूरं प्रतारणया नीत्वा पश्चाद्वास्तवं जलमङ्गुलिनिर्देशेनोपदिशति। एतत्सजातीयाः शाखाचन्द्रस्थूलारुन्धतीत्यादयोऽपि ज्ञेयाः। अतो निर्गुणे चित्तप्रणिधानार्थं सगुणोपास्तिः प्रथमं कर्तव्या। तदुक्तम्

तस्मिन्नन्नमये पिण्डे स्थूलदेहे तनूभृताम् ।
जन्मव्याधिजरामृत्युनिलये वर्तते दृढा ।
आत्मबुद्धिरहंमानात्कदाचिन्नैव हीयते ॥ ६ ॥
आत्मा न जायते नित्यो म्रियते वा कथंचन ॥ ७ ॥
यज्जायतेऽस्ति विपरिणमते वर्धतेऽपि च ।
क्षीयते नश्यतीत्येते षड्भावा वपुषः स्मृताः ॥ ८ ॥
आत्मनो न विकारित्वं घटस्थनभसो यथा ।
एवमात्माऽवपुस्तस्मादिति संचिन्तयेद्बुधः ॥ ९ ॥
मूषानिक्षिप्तहेमाभः कोशः प्राणमयो भवेत् ।
क्षुत्पिपासापराभूतो नायमात्मा यतो जडः ॥ १० ॥

---

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनाम् ॥" इति ॥ ५ ॥ उपक्रान्तन्यायेन पञ्चकोशान्क्रमेण निराकर्तुं प्रतिजानीते—तस्मिन्निति । तस्मिन्स्थूलदेहस्वरूपे अन्नविकारत्वादन्नमये पिण्डे जन्मव्याध्यादीनां निलये तनूभृतां देहिनां अहंमानादन्तःकरणतादात्म्याध्यासादात्मबुद्धिर्दृढास्ति सा कदापि न हीयते ॥ ६ ॥ आत्मा कीदृश इत्याकाङ्क्षायामाह—आत्मेति । उभयत्र हेतुर्नित्य इति ॥ ७ ॥ देहः कीदृगित्याकाङ्क्षायामाह—यदिति । एते षड्भावविकारा इत्यर्थः । वपुषो देहस्यैव नात्मनः ॥ ८ ॥ तत्र दृष्टान्तः । यथा विकारित्वं घटस्यैव न तदवच्छिन्नस्य नभसः । एवमात्मवपुषोः परस्परं वैधर्म्ये सति अविद्यया तादात्म्यापन्नोऽहमिति देहमेवात्मेति अज्ञो मन्यते । विवेकी तु आत्मा अवपुरिति विचार्य तस्मादन्यमात्मानं प्राणमयं चिन्तयेत् ॥ ९ ॥ एवं प्रागुक्तवैधर्म्यबलेनान्नमयस्यानात्मत्वे निर्णीते तत आन्तरः प्राणमय आत्मत्वेन नोपदेष्टव्य इत्याशयेनाह—मूषेति ।

चिद्रूप आत्मा येनैव स्वदेहमभिपश्यति ।
आत्मैव हि परं ब्रह्म निर्लेपः सुखनीरधिः ॥ ११ ॥
न तदश्नाति किंचैतत्तद्यदश्नाति किंचन ॥ १२ ॥
ततः प्राणमये कोशे कोशोऽस्त्येव मनोमयः ।
स संकल्पविकल्पात्मा बुद्धीन्द्रियसमायुतः ॥ १३ ॥

---

मूषायां निक्षिप्तं हेम यथा तदाकारं तत्संश्लिष्टं ततोऽभ्यर्हितं च तथेति भावः । अन्नमयस्यान्तरः प्राणमयः कोशोऽस्ति । अत्र ब्रह्मभावनाकर्तव्यत्वादुपासनं भवति । इदं सर्वकोशानां समानम् । तत्तदुपासनफलं ब्रह्मवल्ल्यां स्फुटमभिहितम् । ततः शुद्धचित्त एवं विचारयति । अयं प्राणमयः कोशो नात्मा यतोऽयं जडः क्षुत्पिपासाभ्यां व्याकुलश्च ॥ १० ॥ चिद्रूप इति । चिद्रूपो ज्ञानस्वरूपः । येनात्मनैव स्वदेहं पश्यति । स आत्मैव परं ब्रह्म । स कीदृशः । निर्लेपः दुःखलेपरहितः । अतएव सुखनीरधिरानन्दसमुद्रः ॥११॥ न तदिति । तत् अज्ञानं कर्तृ एतद्ब्रह्म नाश्नाति न कवलीकरोति । वशीकरोतीतियावत् । किंच तद्ब्रह्म किंचन यदज्ञानं अश्नाति स्वसत्ताकवलितं करोतीत्यर्थः । एतादृशं ब्रह्म प्राणमयः कोशः कथं स्यादिति भावः । तदुक्तं शंकरभगवत्पादैः "अन्नप्राणमनोमयविज्ञानानन्दपञ्चकोशानाम् । एकैकान्तरभाजां भजति विवेकांशतामात्मा ॥ वपुरिदमन्नमयाख्यः कोशोऽनात्मा घटप्रायः । प्रागुत्पत्तेः पश्चात्तदभावस्यापि दृश्यमानत्वात् ॥ कोशः प्राणमयोऽयं वायुविशेषो वपुष्यवच्छिन्नः । अस्य कथमात्मता स्यात्क्षुत्तृष्णाभ्यामुपेयुषः पीडाम् ॥" इति ॥१२॥ मनोमयकोशमाह—तत इति । सः मनोमयः संकल्पविकल्पस्वरूप इत्यर्थः । अन्यत्स्पष्टम् । "कुरुते वपुष्यहन्तां गेहाद्यौ यः करोति ममतां च । रागद्वेषविधौ यो नासावात्मा मनोमयः

कामः क्रोधस्तथा लोभो मोहो मात्सर्यमेव च।
मदश्चेत्यरिषड्वर्गो ममतेच्छादयोऽपि वा।
मनोमयस्य कोशस्य धर्मा एतस्य तत्र तु ॥ १४ ॥
या कर्मविषया बुद्धिर्वेदशास्त्रार्थनिश्चिता।
सा तु ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः ॥ १५ ॥
इह कर्तृत्वाभिमानी स एव तु न संशयः।
इहामुत्र गतिस्तस्य स जीवो व्यावहारिकः ॥ १६ ॥

---

कोशः" इत्याहुराचार्यपादाः ॥१३॥ पूर्वोक्तसंकल्पवृत्तिभेदानाह—काम इति। कामादयस्त्वेते मनोमयकोशस्य धर्माः। वृत्तिविशेषा इत्यर्थः। तथाच श्रुतिः—"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएव" इति। तत्र त्विति। प्रागुक्तेऽन्नमयकोशे एते धर्माः स्फुटमभिव्यज्यन्त इति शेषः ॥१४॥ विज्ञानमयकोशमाह—येति। कर्मेत्युपलक्षणम्। वैदिकं वा लौकिकं वा कर्म भवतु तद्विषयिणी बुद्धिः वेदाश्च शास्त्राणि च। इदमप्युपलक्षणम्। लौकिकं वा गृहकृत्यादि तेषामर्थे निश्चिता सती सा बुद्धिः ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः। सार्वविभक्तिकस्तसिः। विज्ञानमयकोश इत्यर्थः। तदाहुः "सुप्ते स्वयं विलीना बोधे व्याप्त्वा कलेवरं सकलम्। विज्ञानशब्दवाच्या चित्प्रतिबिम्बा न बुद्धिरप्यात्मा ॥" इति। इहेति परमार्थतस्तु ब्रह्मेति भावः ॥ १५ ॥ योऽयं जीवन्मुक्तस्तस्य त्रीणि शरीराणि स्थूलं सूक्ष्मं कारणात्मकं चेति। तत्र स्थूलमन्नमयकोशः। लिङ्गशरीरं तु सूक्ष्मं सप्तदशकलात्मकं प्राक्प्रपञ्चितम्। तत्र प्राणमयमनोमयविज्ञानमयानां त्रयाणामन्तर्भावः। सुषुप्तौ भासमानमविद्यावच्छिन्नं कारणशरीरं स एवानन्दमयः कोशः ॥ १६ ॥

व्योमादिसात्त्विकांशेभ्यो जायन्ते धीन्द्रियाणि तु ।
व्योम्नः श्रोत्रं भुवो घ्राणं जलाज्जिह्वाऽथ तेजसः ॥ १७॥
चक्षुर्वायोस्त्वगुत्पन्ना तेषां भौतिकता ततः ॥ १८ ॥
व्योमादीनां समस्तानां सात्त्विकांशेभ्य एव तु ।
जायेते बुद्धिमनसी बुद्धिः स्यान्निश्चयात्मिका ॥ १९ ॥
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि तु ।
व्योमादीनां रजोंशेभ्यो व्यस्तेभ्यस्तान्यनुक्रमात् ॥२०॥
समस्तेभ्यो रजोंशेभ्यः पञ्चप्राणादिवायवः ।
जायन्ते सप्तदशकमेवं लिङ्गशरीरकम् ॥ २१ ॥
एतल्लिङ्गशरीरं तु तप्तायःपिण्डवद्यतः ।
परस्पराध्यासयोगात्साक्षिचैतन्यसंयुतम् ॥ २२ ॥
तदानन्दमयः कोशो भोक्तृत्वं प्रतिपद्यते ।
विद्याकर्मफलादीनां भोक्तेहामुत्र स स्मृतः ॥ २३ ॥

---

तत्र लिङ्गशरीरे काः सप्तदशकला इत्याशङ्क्य ता एवानुक्रामति— व्योमादीति । धीन्द्रियाणि ज्ञानेन्द्रियाणि । एकैकस्मादेकैकस्योत्पत्तिः ॥१७॥१८॥ सर्वेषां सात्त्विकांशेभ्यः बुद्धिमनसी जायेते । बुद्धिर्निश्चयात्मिका भवति । अर्थान्मनः संशयात्मकमिति भावः ॥१९॥२०॥ एवमिति । सप्तदशानां संघः सप्तदशकम् । संघार्थे कन् । "षोडशकलाः पुरुषायमाणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुतिस्तु मनोबुद्ध्योरेकत्वविवक्षया प्रवृत्तेति ज्ञेयम् ॥ २१ ॥ एतदिति । यस्यामवस्थायां जाग्रत्स्वप्नरूपायां एतत्पूर्वोक्तं लिङ्गशरीरं तप्तायःपिण्डवत्परस्पराध्यासात्साक्षिचैतन्येन सह संयुतं भवतीति शेषः ॥२२॥ तदिति । आनन्दमयः कोशः लिङ्गशरीराध्यासाद्भोक्तृत्वं प्रतिपद्यते। विद्योपासना । कर्म श्रौतादि । आदिपदादविहितकर्मादिसंग्रहः । तेषामिहामुत्र भोक्ता स्मृतः । आनन्दमयशब्देन तदवच्छिन्नो जीवः ।

यदाऽध्यासं विहायैष स्वस्वरूपेण तिष्ठति।
अविद्यामात्रसंयुक्तः साक्ष्यात्मा जायते तदा॥ २४॥
द्रष्टान्तःकरणादीनामनुभूतेः स्मृतेरपि।
अतोऽन्तःकरणाध्यासादध्यासित्वेन चात्मनः।
भोक्तृत्वं साक्षिता चेति द्वैधं तस्योपपद्यते॥ २५॥
आतपश्चापि तच्छाया तत्प्रकाशे विराजते।
एको भोजयिता तत्र भुङ्क्तेऽन्यः कर्मणः फलम्॥ २६॥

---

स तु तत्तच्छरीराध्यासात्तत्रतत्र कर्ता भवतीति भावः॥ २३॥ यदेति। सुषुप्तौ एष आत्मा लिङ्गाध्यासं विहाय स्वस्मिन्बिम्बरूपेण प्रतिबिम्बरूपेण समुद्रमग्नघटवत्तिष्ठति। अविद्यामात्रसंयुक्तः सन् तदा साक्षी जायते। "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य" इति श्रुतेः॥ २४॥ ननु तर्कि जाग्रदादौ साक्षी नास्त्येव तथा सति अवस्थात्रयसाक्षित्वं प्रागुक्तं व्याकुप्येतेत्याशङ्क्याह—द्रष्टेति। अन्तःकरणादीनामिन्द्रियाणां तथा तत्तद्वृत्तीनामनुभवस्मृतिरूपाणां स जीवो द्रष्टा साक्षीत्यर्थः। अन्तःकरणाध्यासात् अध्यासवत्त्वेन साक्षिणोऽप्यात्मनो भोक्तृत्वं साक्षिता च द्वैधं द्वैविध्यं तस्य जीवस्योपपद्यते। अन्तःकरणस्योपाधित्वे साक्षित्वं विशेषणत्वे भोक्तृत्वं चेति। बिम्बस्य तु साक्षित्वमेव। तस्यापि अविद्याविशेषणत्वे कर्तव्यं तथाप्यनावृतत्वात्साक्ष्येवेत्युच्यत इति भावः॥२५॥ आतप इति। आतप इवातपः अनावृतबिम्बस्वरूपं छायेव छाया आवृतप्रतिबिम्बस्वरूपं इत्युभयं कल्पितभेदः। तत्प्रकाशे तस्मिन्नेव ब्रह्मात्मके प्रकाशे विराजते प्रकाशते। तत्रान्यो जीवो दुःखसुखादिकर्मफलभोक्ता। एक ईश्वरो भोजयिता। एतेन 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ' इति पिबदपिबतोः पिबच्छब्दो गौणः। छत्र्यछत्रिशब्दवत्। वस्तुतस्तु जीवे-

क्षेत्रज्ञं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि प्रग्रहं तु मनस्तथा ॥ २७ ॥
इन्द्रियाणि हयान्विद्धि विषयास्तेषु गोचराः ।
इन्द्रियैर्मनसा युक्तं भोक्तारं विद्धि पूरुषम् ॥ २८ ॥
एवं शान्त्यादिमुक्तः सन्नुपास्ते यः सदा द्विजः ।
उद्घाट्योद्घाट्यैकमेकं यथैव कदलीतरोः ॥ २९ ॥
वल्कलानि ततः पश्चाल्लभते सारमुत्तमम् ।
तथैव पञ्चकोशेषु मनः संक्रामयन्क्रमात् ॥ ३० ॥

---

श्वरब्रह्मणामैक्यमेव । भेदविधायिन्या अविद्याया मिथ्यात्वात् । तदुक्तम् "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । तदा जीवेशयोर्भेदमसन्तं कः करिष्यति ॥" इति । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिश्रुतेरिति दिक् ॥ २६ ॥ कठवल्लीमर्थतः संगृह्णाति—क्षेत्रज्ञमिति । प्रग्रहं रशनारूपं मनो बुद्धिं च सारथिम् ॥ २७ ॥ तेष्वश्वेषु संक्रमितुं प्रवृत्तेषु विषयाः शब्दादयः गोचराः संचरणप्रदेशा भवन्तीति विद्धि । तथाच पूर्वोक्तैरिन्द्रियैर्मनसा युक्तं पुरुषमात्मानं भोक्तारं विद्धि अन्यथाऽभोक्तारं विद्धीति भावः । तथाच न्यायः "यथा च तक्षोभयथा" इति ॥ २८ ॥ अतएवाकर्त्रात्मस्वरूपलाभाय पञ्चकोशनिरासपूर्वकमात्मोपासनं दृष्टान्तेनोपपादयति—एवमिति । उद्घाट्येति । यथा कदलीतरोरेकैकं यथा तथा वल्कलानि उद्घाट्योद्घाट्य ततः पश्चात्सारं लभते । तथाच पञ्चसु कोशेष्वेकमेकं निराकृत्यापरस्मिन्नपरस्मिन् क्रमान्मनः संक्रमयन् तेषां मध्ये सारभूतमात्मानं विन्दति प्राप्नोति । अपिशब्दात् "यो वेद निहितं गुहायां" इति श्रुतिर्दर्शिता भवतीति भावः । नन्वानन्दमयस्य कथं कोशत्वं कोशस्याविद्याकार्यत्वात् आनन्दमयस्तु ब्रह्मेति चेन्न । आनन्दमयस्य 'ब्रह्मपुच्छं प्रतिष्ठा' इति वाक्यार्थभूतसर्वाधार-

तेषां मध्ये ततः सारमात्मानमपि विन्दति ॥ ३१ ॥
एवं मनः समाधाय संयतो मनसि द्विजः ।
अथ प्रवर्तयेच्चित्तं निराकारे परात्मनि ॥ ३२ ॥
ततो मनः प्रगृह्णाति परात्मानं हि केवलम् ।
यत्तदद्रेश्यमग्राह्यमस्थूलाद्युक्तिगोचरम् ॥ ३३ ॥

श्रीराम उवाच ।

भगवन्श्रवणेनैव प्रवर्तन्ते जनाः कथम् ।
वेदशास्त्रार्थसंपन्ना यज्वानः सत्यवादिनः ॥ ३४ ॥
श्रृण्वन्तोऽपि तथात्मानं जानते नैव केचन ।
ज्ञात्वापि मन्वते मिथ्या किमेतत्तव मायया ॥ ३५ ॥

श्रीशिव उवाच ।

एवमेव महाबाहो नात्र कार्या विचारणा ।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ३६ ॥

---

ब्रह्मप्रतिपत्त्युपायतयैव श्रुतौ प्रतिपादितत्वात् "आनन्दमयोऽभ्यासात्" इत्यधिकरणे भाष्यकारैरित्थं सिद्धान्तितत्वाच्च ॥२९॥३०॥३१॥ तदेवं पञ्चकोशानतिक्रम्यानन्दमयादप्यान्तरं "ब्रह्मपुच्छं प्रतिष्ठा" इति श्रुत्या स्वप्राधान्येन निर्दिष्टं वास्तवस्वरूपमाह—एवं मन इति । एवमुक्तरीत्या पञ्चस्वपि कोशेषु निराकृतेषु तदधिष्ठाने ब्रह्मणि मनः समाधाय मननेन स्थिरीकृत्य । अथानन्तरं द्विजः निराकारे परमात्मनि निदिध्यासनेन चित्तं प्रवर्तयेत् । कीदृशो द्विजः । मनसि संयतो मनोनिग्रहवानित्यर्थः ॥ ३२ ॥ तत इति । मनः केवलं परमात्मानं प्रगृह्णाति वृत्त्याभिव्याप्नोतीत्यर्थः । कीदृशम् । अद्रेश्यादिश्रुतितात्पर्यविषयीभूतमित्यर्थः ॥ ३३ ॥ एवं पञ्चकोशविवरणेनाद्वयब्रह्मप्राप्तिं श्रुत्वा चमत्कृतो रामो भगवन्तमाह—भगवन्निति । श्रवणे जना नैव प्रवर्तन्त एतत्कथम् ॥ ३४ ॥ केचन शृण्वन्तोऽपि न

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।
अभक्ता ये महाबाहो मम श्रद्धाविवर्जिताः ॥ ३७ ॥
फलं कामयमानास्ते चैहिकामुष्मिकादिकम् ।
क्षयिष्णवल्पं सातिशयं ततः कर्मफलं मतम् ॥ ३८ ॥
तदविज्ञाय कर्माणि येऽकुर्वन्ति नराधमाः ।
मातुः पतन्ति ते गर्भे मृत्योर्वक्त्रे पुनः पुनः ॥ ३९ ॥
नानायोनिषु जातस्य देहिनो यस्य कस्यचित् ।
कोटिजन्मार्जितैः पुण्यैर्मयि भक्तिः प्रजायते ॥ ४० ॥
स एव लभते ज्ञानं मद्भक्तः श्रद्धयान्वितः ।
नान्यकर्माणि कुर्वाणो जन्मकोटिशतैरपि ॥ ४१ ॥
ततः सर्वं परित्यज्य मद्भक्तिं समुदाहर ॥ ४२ ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ४३ ॥

---

जानते । केचन परोक्षतयात्मानं ज्ञात्वापि मिथ्याभूतमेतन्मन्वते नाद्रियन्त इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ स एवेति । नान्यकर्माणीति । काम्यनिषिद्धानि कर्माणि । एवं बहुजन्मसु कृतया मद्भक्त्या ज्ञानं प्राप्यत इति भावः । "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इति स्मृतेः ॥४१॥ ततः सर्वमिति । यतः कारणादनेककोटिजन्मार्जितैः सुकृतैर्मद्भक्तिः प्राप्यते ततः कारणान्मद्भक्तिं समुदाहर कुरु । यद्वा सतां मध्ये दक्षिणं बाहुमुद्धृत्य भगवद्भक्तो न प्रणश्यतीति प्रतिजानीहीत्यर्थः । "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इति स्मृतेः ॥ ४२ ॥ सर्वधर्मानिति । अहमिदमनया कामनया करोमीति कर्तृत्वाध्यासफलाभिसंधिपूर्वकं सर्वधर्मान्परित्यज्य मामेकं सर्वेश्वरं सर्वजीवनियन्तारं शरणं व्रज । शरणत्वं तु "तस्यैवाहं ममैवासौ स एवाहमिति

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि राम त्वं तत्कुरुष्व मदर्पणम्।
ततः परतरं नास्ति भक्तिर्मयि रघूत्तम ॥ ४४ ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु श्रीशिवराघवसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः १५

श्रीराम उवाच।

भक्तिस्ते कीदृशी देव जायते वा कथं च सा।
यथा निर्वाणरूपं तु लभते मोक्षमुत्तमम्।
तद्ब्रूहि गिरिजाकान्त प्राप्यते येन निर्वृतिः ॥ १ ॥

श्रीभगवानुवाच।

यो वेदाध्ययनं यज्ञं दानानि विविधानि च।
मदर्पणधिया कुर्यात्स मे भक्तः स मे प्रियः ॥ २ ॥

---

त्रिधा। भगवच्छरणत्वं स्यात्साधनाभ्यासपाकतः ॥" इति। एवं मां शरणमागतं त्वां सर्वपापेभ्यः शरीरत्रयाध्यासतत्कार्यजननमरणनानागतिरूपेभ्यो मोक्षयिष्यामि। मा शुचः कथं मुक्तो भविष्यामीति वृथा शोकं मा कृथा इत्यर्थः ॥४३॥ सर्वं कर्म मदर्पणं कुर्वित्याह—यत्करोषीत्यादि। ततः मदर्पणादन्यत्साधनं परतरं श्रेष्ठं नास्ति। मयि सर्वकर्मसमर्पणमेव भक्तिशब्दार्थः। हे रघूत्तम ॥४४॥ इति श्रीलक्ष्मीनरहरिसूनुहरिदीक्षितकृतौ शिवगीताटीकायां बालानन्दिन्यां चतुर्दशोऽध्यायः ॥ १४ ॥

भक्तेरेवान्तरभेदान्प्रपञ्चयितुं पञ्चदशोऽध्याय आरभ्यते। तत्रादितः सार्धश्लोकाष्टकं स्पष्टार्थम्। कीदृशी किंविधा। निर्वाणरूपं

नर्यभस्म समादाय विशुद्धं श्रोत्रियालयात् ।
अग्निरित्यादिभिर्मन्त्रैरभिमन्त्र्य यथाविधि ॥ ३ ॥
उद्धूलयति गात्राणि तेन चार्चति मामपि ।
तस्मात्परतरा भक्तिर्मम राम न विद्यते ॥ ४ ॥
सर्वदा शिरसा कण्ठे रुद्राक्षान्धारयेत्तु यः ।
पञ्चाक्षरीजपपरः स मे भक्तः स मे प्रियः ॥ ५ ॥
भस्मच्छन्नो भस्मशायी सर्वदा विजितेन्द्रियः ।
यस्तु रुद्रं जपेन्नित्यं चिन्तयेन्मामनन्यधीः ॥ ६ ॥
स तेनैव च देहेन शिवः संजायते स्वयम् ।
जपेद्यो रुद्रसूक्तानि तथाऽथर्वशिरः परम् ॥ ७ ॥
कैवल्योपनिषत्सूक्तं श्वेताश्वतरमेव च ।
ततः परतरो भक्तो मम लोके न विद्यते ॥ ८ ॥
अन्यत्र धर्मादन्यस्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताद्भव्याच्च यत्प्रवक्ष्यामि तच्छृणु ॥ ९ ॥
वदन्ति यत्पदं वेदाः शास्त्राणि विविधानि च ।
सर्वोपनिषदां सारं दध्नो घृतमिवोद्धृतम् ॥ १० ॥

---

कैवल्यरूपम् । निर्वृतिः सुखम् ॥ १ ॥ २ ॥ नर्यभस्माग्निहोत्रभस्म ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अन्यत्रेति । कठवल्लीषु नाचिकेतसंप्रति ब्रह्मप्राप्तिसाधनानां मध्ये श्रेष्ठतमं ओमित्येतदालम्बनं मृत्युनोपदिष्टं तत्प्रतिपादयति । धर्मादन्यत्र धर्मविलक्षणमित्यर्थः । अन्यस्मादधर्माच्च विलक्षणम् । तथा कृताकृतात्कार्यकारणादन्यद्भूताद्भव्याच्च कालादन्यत् । कालत्रयापरिच्छिन्नमित्यर्थः । ईदृशं वस्तु वक्ष्यामि तच्छृणु ॥ ९ ॥ वदन्तीति । पदं पदनीयं यद्वस्तु वेदा

यदिच्छन्तो ब्रह्मचर्यं चरन्ति मुनयः सदा ।
तत्ते पदं संग्रहेण प्रब्रविष्यामि यत्पदम् ॥ ११ ॥
एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा ब्रह्मलोके महीयते ॥ १२ ॥
छन्दसां यस्तु धेनूनामृषभत्वेन चोदितः ।
इदमेव पतिः सेतुरमृतस्य च धारणात् ॥ १३ ॥
मेदसा पिहिते कोशे ब्रह्म यत्परमोमिति ॥ १४ ॥
चतस्रस्तस्य मात्राः स्युरकारोकारकौ तथा ।
मकारश्चावसानेऽर्धमात्रेति परिकीर्तिता ॥ १५ ॥
पूर्वत्र भूश्च ऋग्वेदो ब्रह्माष्टवसवस्तथा ।
गार्हपत्यश्च गायत्री गङ्गा प्रातःसवस्तथा ॥ १६ ॥
द्वितीया तु भुवो विष्णू रुद्रोऽनुष्टुब्यजुस्तथा ।
यमुना दक्षिणाग्निश्च मध्यंदिनसवः स्मृतः ॥ १७ ॥
तृतीया च सुवः सामान्यादित्यश्च महेश्वरः ।
अग्निराहवनीयश्च जगती च सरस्वती ॥ १८ ॥

---

वदन्ति तत्पदं ब्रविष्यामीत्यन्वयः । छान्दसं रूपम् ॥ १० ॥ ११ ॥ एतदेवाक्षरं ब्रह्म सगुणं निर्गुणं च । एतदेवाक्षरं ज्ञात्वा ब्रह्मत्वेनोपास्य ब्रह्मलोके महीयते । तत्र ब्रह्मणा सह कैवल्यं प्राप्नोतीति भावः ॥ १२ ॥ छन्दसामिति । छन्दसां वेदरूपाणां धेनूनां ऋषभत्वेन यः श्रुतावुक्तः "यश्छन्दसामृषभो विश्वरूपः" इत्यादि तैत्तिरीयश्रुतेः । इदमेवाक्षरं पतिः नियामकः । संसारस्य सेतुरिव सेतुः मोक्षस्य धारणाच्च सेतुः ॥ १३ ॥ मेदसा मांसविशेषेण पिहिते कोशे हृदयब्रह्मरूपे यत्परं ब्रह्म ओमिति तद्भावयतो मम भक्तस्य क्रमेण मुक्तिर्भविष्यतीति भावः ॥ १४ ॥ चतस्र इति । तस्य प्रणवस्य अकार उकारो मकारश्च । अवसाने चतुर्थी अर्धमात्रेत्यर्थः । यद्यपि नेदं व्याकरणानुगुणं तथाप्यागमानुगुणमस्तीति ज्ञेयम् ॥ १५ ॥ चतसृणां

तृतीयं सवनं प्रोक्तमथर्वत्वेन यन्मतम् ।
चतुर्थी यावसानेऽर्धमात्रा सा सोमलोकगा ॥ १९ ॥
अथर्वाङ्गिरसः संवर्तकोऽग्निश्च महस्तथा ।
विराट् सभ्यावसथ्यौ च शुतुद्रिर्यज्ञपुच्छकः ॥ २० ॥
प्रथमा रक्तवर्णा स्याद्द्वितीया भास्वरा मता ।
तृतीया विद्युदाभासा चतुर्थी शुक्लवर्णिनी ॥ २१ ॥
जातं च जायमानं च तदोंकारे प्रतिष्ठितम् ।
विश्वं भूतं च भुवनं विचित्रं बहुधा तथा ॥ २२ ॥
जातं च जायमानं यत्तत्सर्वं रुद्र उच्यते ।
तस्मिन्नेव पुनः प्राणः सर्वमोंकार उच्यते ॥ २३ ॥
प्रविलीनं तदोंकारे परं ब्रह्म सनातनम् ।
तस्मादोंकारजापी यः स मुक्तो नात्र संशयः ॥ २४ ॥
त्रेताग्नेः स्मार्तवह्नेर्वा शैवाग्नेर्वा समाहितम् ।
भस्माभिमन्त्र्य यो मां तु प्रणवेन प्रपूजयेत् ।
तस्मात्परतरो भक्तो मम लोके न विद्यते ॥ २५ ॥
शालाग्नेर्दाववह्नेर्वा भस्मानीयाभिमन्त्रितम् ।
यो विलिम्पति गात्राणि स शूद्रोऽपि विमुच्यते ॥ २६ ॥
कुशपुष्पैर्बिल्वदलैः पुष्पैर्वा गिरिसंभवैः ।
यो मामर्चयते नित्यं प्रणवेन प्रियो हि सः ॥ २७ ॥

---

मात्राणां प्रत्येकं भूरादयो देवता ध्येयाः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तासां रूपाण्याह—प्रथमेति । शुक्लवर्णिनीति । न कर्मधारयान्मत्वर्थीय इति तु प्रायिकम् ॥ २१ ॥ जातमिति । विश्वं सर्वं भुवनं जातं जायमानं च ॐकारे प्रतिष्ठितम् ॥ २२ ॥ रुद्रप्रणवयोरभेदमाह—जातमिति ॥ २३ ॥ २४ ॥ २५ ॥ अग्निहोत्रं विना या होमशाला तदीयाग्नेः ॥ २६ ॥ कुशपुष्पैस्तन्मञ्जरीभिरित्यर्थः

पुष्पं फलं समूलं वा पत्रं सलिलमेव वा ।
यो दद्यात्प्रणवैर्मह्यं तत्कोटिगुणितं भवेत् ॥ २८ ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
यस्यास्त्यध्ययनं नित्यं स मे भक्तः स मे प्रियः ॥ २९ ॥
प्रदोषे यो मम स्थानं गत्वा पूजयते तु माम् ।
स परां श्रियमाप्नोति पश्चान्मयि विलीयते ॥ ३० ॥
अष्टम्यां च चतुर्दश्यां पर्वणोरुभयोरपि ।
भूतिभूषितसर्वाङ्गो यः पूजयति मां निशि ।
कृष्णपक्षे विशेषेण स मे भक्तः स मे प्रियः ॥ ३१ ॥
एकादश्यामुपोष्यैव यः पूजयति मां निशि ।
सोमवारे विशेषेण स मे भक्तो न नश्यति ॥ ३२ ॥
पञ्चामृतैः स्नापयेद्यः पञ्चगव्येन वा पुनः ।
पुष्पोदकैः कुशजलैस्तस्मान्नान्यः प्रियो मम ॥ ३३ ॥
पयसा सर्पिषा चापि मधुनेक्षुरसेन वा ।
पक्वाम्रफलजेनापि नारिकेलजलेन वा ॥ ३४ ॥
गन्धोदकेन वा मां यो रुद्रमन्त्रं समुच्चरन् ।
अभिषिञ्चेत्ततो नान्यः कश्चित्प्रियतमो मम ॥ ३५ ॥
आदित्याभिमुखो भूत्वा ह्यूर्ध्वबाहुर्जले स्थितः ।
मां ध्यायन्रविबिम्बस्थमथर्वाङ्गिरसं जपेत् ॥ ३६ ॥
प्रविशेन्मे शरीरेऽसौ गृहं गृहपतिर्यथा ।
बृहद्रथन्तरं वामदेव्यं देवव्रतानि च ॥ ३७ ॥

---

॥ २७ ॥ प्रणवैरावृत्तियुक्तैरित्यर्थः ॥ २८ ॥ अहिंसा निषिद्धहिंसावर्जनम् ॥ २९ ॥ विलीयते सायुज्यमाप्नोति ॥ ३० ॥ ३१ ॥ ३२ ॥ पञ्चामृतैः गोदुग्धदधिसर्पिर्मधुशर्कराभिः पञ्चगव्यैरिति मधुशर्करास्थाने गोमूत्रगोमये योज्ये ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ बृहद्रथन्तरा-

तद्योगयाज्यदेहांश्च यो गायति ममाग्रतः ।
इह श्रियं परां भुक्त्वा मम सायुज्यमाप्नुयात् ॥ ३८ ॥
ईशावास्यादिमन्त्रान्यो जपेन्नित्यं ममाग्रतः ।
मत्सायुज्यमवाप्नोति मम लोके महीयते ॥ ३९ ॥
भक्तियोगो मया प्रोक्त एवं रघुकुलोद्वह ।
सर्वकामप्रदोऽमर्त्यः किमन्यच्छ्रोतुमिच्छसि ॥ ४० ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां श्रीशिवराघवसंवादे भक्तियोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः १६

श्रीराम उवाच ।

भगवन्मोक्षमार्गो यस्त्वया सम्यगुदाहृतः ।
तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान् ॥ १ ॥

श्रीभगवानुवाच ।

ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चात्राधिकारिणः ।
ब्रह्मचारी गृहस्थो वाऽनुपनीतोऽथ वा द्विजः ॥ २ ॥

---

दयः सामभेदाः ॥ ३७ ॥ ३८ ॥ ३९ ॥ हे रघुकुलश्रेष्ठ, अमर्त्यो मरणधर्मरहितः । प्रवाहरूपेण नित्य इति यावत् ॥ ४० ॥ इति श्रीशिवगीताटीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

अस्मिन्नुपनिषत्सारभूते गीताशास्त्रे केऽधिकारिणः के नाधिकारिण इति जिज्ञासुः श्रीरामो भगवन्तमाह—भगवन्निति ॥ १ ॥ एवं पृष्टो भगवानुवाच—ब्रह्मक्षत्रेति । स्त्रीशूद्रयोः साक्षाच्छ्रवणाधिकारो नास्ति किंतु ब्राह्मणमग्रतः कृत्वा । "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इति स्मृतेः । सोऽपि स्मृतावेव न श्रुतावधिकार इति सिद्धान्तः । शूद्रस्य तदनादरश्रवणात् 'तच्छ्रवणात्सूच्यते

वनस्थो वाऽवनस्थो वा यतिः पाशुपतव्रती ।
बहुनात्र किमुक्तेन यस्य भक्तिः शिवार्चने ॥ ३ ॥
स एवात्राधिकारी स्यान्नान्यचित्तः कथंचन ।
जडोऽन्धो बधिरो मूको निःशौचः कर्मवर्जितः ॥ ४ ॥
अज्ञोपहासा भक्ताश्च भूतिरुद्राक्षधारिणः ।
लिङ्गिनो यश्च वा द्वेष्टि ते नैवात्राधिकारिणः ॥ ५ ॥
यो मां गुरुं पाशुपतव्रतं द्वेष्टि नराधिप ।
विष्णुं वा स न मुच्येत जन्मकोटिशतैरपि ॥ ६ ॥

---

हि' इति न्यायोऽत्रानुसंधेयः । तथा गृहस्थस्याप्यधिकारोऽस्ति । यद्यपि भाष्यकारैस्तथा नृसिंहाश्रमपादैश्च यतीनामेवाधिकारः प्रतिपादितस्तथापि विरक्तस्य गृहस्थस्याप्यधिकारोऽस्ति । "अभयं वै जनकः प्राप्नोति तदात्मानं वेदाहं ब्रह्मास्मि" इति श्रुतेः। अनुपनीतस्यापि योग्यतया द्विजत्वाद्धिकारोऽस्ति । स यदि बुद्धिमांश्चेच्छिक्षार्थं गीताशास्त्रं पाठनीय इति भावः ॥ २ ॥ अवनस्थो विधुरः ॥ ३ ॥ अथानधिकारिण आह—जड इति। जडो मूर्खः । निःशौचो विहिताचारविहीनः । कर्मविवर्जितो विहितकर्मरहितः ॥ ४ ॥ अज्ञेष्वनुग्रहयोग्येषूपहासतत्परा अज्ञोपहासा उच्यन्ते ते च ते अभक्ताश्च । यद्वा अज्ञोपहासाश्चाभक्ताश्चेति द्वन्द्वः । तथा भूतिरुद्राक्षधारिणो लिङ्गिनः पाशुपतव्रतिनो यो द्वेष्टि । ते सर्वेऽत्र नैवाधिकारिणः स्युरिति शेषः ॥ ५ ॥ यो मामिति । मां महेश्वरं गुरुं ब्रह्मोपदेष्टारं तथा पाशुपतव्रतं तथा विष्णुं च यो द्वेष्टि स जन्मनां कोटिशतैरपि न मुच्येत। तदुक्तं बृहन्नारदीये "अनादिनिधने देवे हरिशंकरसंज्ञिते । अज्ञानसागरे मग्ना भेदं कुर्वन्ति पापिनः" । वायुपुराणे—'ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरे पुरा । कल्पान्तरे तथा ब्रह्मा रुद्रविष्णू जजान ह ॥ विष्णुः कल्पान्तरे तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥ एवं कल्पेषु बहुषु ब्रह्मविष्णुमहेश्वराः । परस्प-

अनेककर्मसक्तोऽपि शिवज्ञानविवर्जितः ।
शिवभक्तिविहीनश्च संसारी नैव मुच्यते ॥ ७ ॥
आसक्ताः फलसङ्गेन ये त्ववैदिककर्मणि ।
दृष्टमात्रफलास्ते तु न मुक्तावधिकारिणः ॥ ८ ॥

---

रस्माज्जायन्ते परस्परजयैषिणः ॥ अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥' बृहन्नारदीये—'युगान्ते जगदत्त्येतद्रुद्ररूपधरो हरिः । रुद्रो वै विष्णुरूपेण पालयत्यखिलं जगत् । हरिरूपधरं लिङ्गं लिङ्गरूपधरो हरिः । ईषदप्यन्तरं नास्ति भेदकृत्पापमश्नुते ॥' हरिवंशे—'अहं त्वं सर्वगो देवस्त्वमेवाहं जनार्दन । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते । त्वदुपासा जगन्नाथ सैवास्तां मम गोपते । यश्च त्वां द्वेष्टि गोविन्द स मां द्वेष्टि न संशयः ॥' एवं कोटिशः प्रमाणेषु सत्सु माध्वाः काटरमाठरादिश्रुतिस्मृतिकल्पकाः शिवं निन्दन्ति । तथा शैवपाषण्डिनो विष्णुं निन्दन्ति ते उभये अपि नरकेषु निपतन्तीति दिक् ॥ ६ ॥ अनेकेति । अनेकेषु काम्यकर्मस्वासक्ताः । "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः" । इत्युपक्रम्य "भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् । व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥" इति स्मृतेः ॥ ७ ॥ अवैदिकेषु वामपाशुपतपञ्चरात्राद्यागमोक्तकर्मणि मद्यमांसमैथुनत्रिशूलाद्यङ्कनरूपे दृष्टमात्रं पूजासत्कारादिरूपं फलं येषां ते तथोक्तास्ते मुक्तौ नाधिकारिणः । अयं भावः । शाक्ताः शैवाः वैष्णवाश्च द्विविधाः । वैदिका अवैदिकाश्चेति । वैदिकशाक्तानां मन्त्रमुद्रायन्त्रपूजादिकमागमोक्तं युक्तं सर्वमेव । "विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः" इत्युक्तत्वात् । मद्यमांसादिकं तु शूद्रादिसंकरजातीयानामेव द्विजानां तु नरकसाधनम् । तथा पाशुपतानामपि विभूतिरुद्राक्षधारणपञ्चाक्षरीजपादिना शिवभक्तिर्विष्णुभक्तिश्च मोक्षसाधनम् । विष्णुभक्तानां ऊर्ध्वपुण्ड्रधारणद्वितीयैकादश्युपवासादिना

अविमुक्ते द्वारकायां श्रीशैले पुण्डरीकके ।
देहान्ते तारकं ब्रह्म लभते मदनुग्रहात् ॥ ९ ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १० ॥
विप्रस्यानुपनीतस्य विधिरेवमुदाहृतः ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ ११ ॥

---

विष्णुभक्तिः शिवभक्तिश्च मोक्षसाधनम् । अन्यथा नरकसाधनमेवेति दिक् ॥ ८ ॥ क्षेत्राण्यपि मोक्षसाधनानि सन्तीत्याह—अविमुक्त इति । अविमुक्तं काशी पुण्डरीकं व्याघ्रपुरं । उक्तेषु चतुर्षु क्षेत्रेषु स्थितोऽधिकारी तारकं प्रणवपूर्वकं महावाक्योपदेशं ममानुग्रहाल्लभते । अत्र यद्यप्यविशेषेण तारकं लभत इत्युक्तं तथाप्यविमुक्ते जन्तुमात्रस्य तारकोपदेशः । तत्रापि पापिनां भैरवयातनानन्तरमुपदेशः । "यातनान्ते दिशेन्मतिम्" इति वचनात् । निष्पापानां तु प्राणोत्क्रमणकाल एवोपदेशः । द्वारकादिक्षेत्रान्तरेषु तु सन्मार्गनिष्ठानामुत्तमाधिकारिणां मरणकाल एवोपदेशः । पापिनां तु जन्मान्तरे काशीप्राप्तिद्वारेति सिद्धान्तः । विस्तरस्तु भट्टोजिदीक्षितीयव्याख्याने द्रष्टव्यः ॥ ९ ॥ काश्यादिक्षेत्रेषु कथं वर्तितव्यमित्याकाङ्क्षायामाह—यस्येति । हस्तादिकं यस्य सुसंयतं सम्यक् निगृहीतम् । विद्यादीनां त्रयाणां निग्रहस्तु दम्भराहित्यमेव सः तीर्थवासोक्तं फलमश्नुते अन्यथा नेति भावः । तदुक्तं काशीखण्डे—"अशनं व्यसनं वासः काश्यां येषाममार्गतः । कीकटेन समा काशी गङ्गाप्यङ्गारवाहिनी ॥" इति ॥ १० ॥ अनुपनीतोऽप्यधिकारीति प्रागुक्तं तत्र विशेषमाह—विप्रस्येति । एवं वक्ष्यमाणरीत्या विधिरुदाहृतः । तमेवाह । वेदं नोच्चारयेत् स्वधानिनयनात् ऋते विनेत्यर्थः । "कृतचौलस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥" इति व्याघ्रपादवचनात् । स्मृतिपाठे त्वधिकारोऽस्त्येवेति

स शूद्रेण समस्तावद्यावद्वेदान्न जायते।
नामसंकीर्तने ध्याने सर्व एवाधिकारिणः ॥ १२ ॥
संसारान्मुच्यते जन्तुः शिवतादात्म्यभावनात्।
यथा दानं तपो वेदाध्ययनं चान्यकर्म वा।
सहस्रांशं तु नार्हन्ति सर्वदा ध्यानकर्मणः ॥ १३ ॥
जातिमाश्रममङ्गानि देशं कालमथापि वा।
आसनादीनि कर्माणि ध्यानं नापेक्षते क्वचित् ॥ १४ ॥
गच्छंस्तिष्ठंश्चरन्वापि शयानो वान्यकर्मणि।
पातकेनापि युक्तो वा ध्यानादेव विमुच्यते ॥ १५ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ १६ ॥

---

दिक् ॥ ११ ॥ सोऽनुपनीतस्तावच्छूद्रेण समो यावत्पर्यन्तं वेदान्न जायते सावित्रं जन्म न प्राप्नोतीत्यर्थः। तथाच स्त्रीशूद्रानुपनीतादीनां पुराणादिश्रवणादिना यथायथं ज्ञानं संभवतीति भावः ॥१२॥ ध्यानस्य श्रेष्ठत्वमाह—संसारादिति। तादात्म्यं शिवोऽहमस्मीत्यैक्यं तस्य भावनात्। यथा यथावत् यथाविधीत्यर्थः। क्रियमाणं दानादि ध्यानस्य सहस्रांशं नार्हति ॥ १३ ॥ जातिमिति। ब्राह्मणत्वादिजातिं ब्रह्मचर्याद्याश्रमं अङ्गानि न्यासविधिं देशं पुण्यगिर्यादिरूपं कालं प्रातःकालादिं आसनादीनि शिखाबन्धनोपस्पर्शनादिकर्माणि ध्यानं कर्तृ नापेक्षते ॥ १४ ॥ यथाकामं ध्यानं कर्तव्यमित्याह—गच्छन्निति ॥ १५ ॥ नेहेति। इह ध्यानेऽभिक्रमस्यारम्भस्य नाशो विघ्नो नास्ति। प्रत्यवायश्च न विद्यते। "नित्यकर्म परित्यज्य वेदान्तश्रवणं विना। वर्तमानस्तु संन्यासी पतत्येव न संशयः॥" इति स्मृतिरन्यत्र विस्तरा। अस्य निदिध्यासनरूपस्य धर्मस्य संबन्धि स्वल्पमपि ध्यानैकदेशोपि महतः संसारभयात्त्रायते निःशेषप्रतिबन्धक-

आश्चर्ये वा भये शोके क्षुते वा मम नाम यः।
व्याजेनापि स्मरेन्मर्त्यः स याति परमां गतिम् ॥ १७॥
महापापैरपि स्पृष्टो देहान्ते यस्तु मां स्मरेत्।
पञ्चाक्षरीं वोच्चरति स मुक्तो नात्र संशयः ॥ १८ ॥
विश्वं शिवमयं यस्तु पश्यन्नात्मानमात्मना।
तस्य क्षेत्रेषु तीर्थेषु किं कार्यं वान्यकर्मसु ॥ १९ ॥
सर्वेण सर्वदा कार्यं भूतिरुद्राक्षधारणम्।
युक्तेनाथाप्ययुक्तेन शिवभक्तिमभीप्सता ॥ २० ॥
नर्यभस्मसमायुक्तो रुद्राक्षान्यस्तु धारयेत्।
महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥ २१ ॥
अन्यानि शैवकर्माणि करोतु न करोतु वा।
शिवनाम जपेद्यस्तु सर्वदा मुच्यते तु सः ॥ २२ ॥
अन्तकाले तु रुद्राक्षान्विभूतिं धारयेत्तु यः।
महापापोपपापौघैरपि स्पृष्टो नराधमः ॥ २३ ॥
सर्वथा नोपसर्पन्ति तं जनं यमकिंकराः ॥ २४ ॥
बिल्वमूलमृदा यस्तु शरीरमुपलिम्पति।
अन्तकालेऽन्तकजनैः स दूरीक्रियते नरः ॥ २५ ॥

श्रीराम उवाच।

भगवन्पूजितः कुत्र कुत्र वा त्वं प्रसीदसि।
तद्ब्रूहि मम जिज्ञासा वर्तते महती विभो ॥ २६ ॥

---

निवृत्तौ तत्रैव विमुच्यते। सति प्रतिबन्धके जन्मान्तरे मुक्तो भवति। तदुक्तं भगवद्गीतासु। 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥" इति। तस्माद्ध्यानेन मुक्तो भवतीति निष्कर्षः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ नर्यभस्मेति

श्रीभगवानुवाच।

मृदा वा गोमयेनापि भस्मना चन्दनेन वा।
सिकताभिर्दारुणा वा पाषाणेनापि निर्मिता।
लोहेन वाथ रङ्गेण कांस्यखर्परपित्तलैः॥ २७॥
ताम्ररौप्यसुवर्णैर्वा रत्नैर्नानाविधैरपि।
अथवा पारदेनैव कर्पूरेणाथवा कृता॥ २८॥
प्रतिमां शिवलिङ्गं वा द्रव्यैरेतैः कृतं तु यत्।
तत्र मां पूजयेत्तेषु फलं कोटिगुणोत्तरम्॥ २९॥
मृद्दारुकांस्यलोहैश्च पाषाणेनापि निर्मिता।
गृहिणा प्रतिमा कार्या शिवं शश्वदभीप्सता॥ ३०॥
आयुः श्रियं कुलं धर्मं पुत्रानाप्नोति तैः क्रमात्।
बिल्ववृक्षे तत्फले वा यो मां पूजयते नरः॥ ३१॥
परां श्रियमिह प्राप्य मम लोके महीयते।
बिल्ववृक्षं समाश्रित्य यो मन्त्रान्विधिना जपेत्॥ ३२॥
एकेन दिवसेनैव तत्पुरश्चरणं भवेत्।
यस्तु बिल्ववने नित्यं कुटीं कृत्वा वसेन्नरः॥ ३३॥
सर्वे मन्त्राः प्रसिध्यन्ति जपमात्रेण केवलम्।
पर्वताग्रे नदीतीरे बिल्वमूले शिवालये॥ ३४॥
अग्निहोत्रे केशवस्य सन्निधौ च जपेत्तु यः।
नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः॥ ३५॥
तं न स्पृशन्ति पापानि शिवसायुज्यमृच्छति।
स्थण्डिले वा जले वह्नौ वायावाकाश एव वा॥ ३६॥

---

॥ २१॥ २२॥ २३॥ २४॥ २५॥ २६॥ २७॥ ताम्ररौप्येति
॥ २८॥ २९॥ ३०॥ ३१॥ ३२॥ ३३॥ ३४॥ ३५॥ ३६॥

गिरौ स्वात्मनि वा यो मां पूजयेत्प्रयतो नरः ।
स कृत्स्नं फलमाप्नोति लवमात्रेण राघव ॥ ३७ ॥
आत्मपूजासमा नास्ति पूजा रघुकुलोद्वह ।
मत्सायुज्यमवाप्नोति चण्डालोऽप्यात्मपूजया ॥ ३८ ॥
सर्वान्कामानवाप्नोति मनुष्यः कम्बलासने ।
कृष्णाजिने भवेन्मुक्तिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ ३९ ॥
कुशासने भवेज्ज्ञानमारोग्यं पत्रनिर्मिते ।
पाषाणे दुःखमाप्नोति काष्ठे नानाविधान्गदान् ॥ ४० ॥
वस्त्रे श्रियमवाप्नोति भूमौ मन्त्रो न सिध्यति ।
उदङ्मुखः प्राङ्मुखो वा जपं पूजां समाचरेत् ॥ ४१ ॥
अक्षमालाविधिं वक्ष्ये शृणुष्वावहितो नृप ।
साम्राज्यं स्फटिको दद्यात्पुत्रजीवः परां श्रियम् ॥ ४२ ॥
आत्मज्ञानं कुशग्रन्थी रुद्राक्षाः सर्वकामदाः ।
प्रवालैश्च कृता माला सर्वलोकवशप्रदा ॥ ४३ ॥
मोक्षप्रदा च माला स्यादामलक्याः फलैः कृता ।
मुक्ताफलैः कृता माला सर्वविद्याप्रदायिनी ॥ ४४ ॥
माणिक्यरचिता माला त्रैलोक्यस्य वशंकरी ।
नीलैर्मरकतैर्वापि कृता शत्रुभयप्रदा ॥ ४५ ॥
सुवर्णरचिता माला दद्याद्वै महतीं श्रियम् ।
तथा रौप्यमयी माला कन्यां यच्छति कामिताम् ॥ ४६ ॥
उक्तानां सर्वकामानां दायिनी पारदैः कृता ।
अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा ॥ ४७ ॥

---

॥ ३७ ॥ आत्मपूजेति । मम हृदये परमात्मास्तीति मत्वा यद्यत्स्वभोगाय गृह्णाति तत्सर्वं तस्मै निवेद्य स्वयं गृह्णाति तद्भयेन च पापादिकं नाचरति सात्मपूजा ॥ ३८ ॥ ३९ ॥ कुशासन इति ॥ पत्रं कोमलपत्रम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

शतसंख्योत्तमा माला पञ्चाशन्मध्यमा मता ।
चतुःपञ्चशता यद्वा ह्यधमा सप्तविंशतिः ॥ ४८ ॥
अधमा पञ्चविंशत्या यदि स्याच्छतनिर्मिता ।
पञ्चाशदक्षराण्यत्रानुलोमप्रतिलोमतः ॥ ४९ ॥
इत्येवं स्थापयेत्स्पष्टं न कस्मैचित्प्रदर्शयेत् ॥ ५० ॥
वर्णैर्विन्यस्तया यस्तु क्रियते मालया जपः ।
एकवारेण तस्यैव पुरश्चर्या कृता भवेत् ॥ ५१ ॥
सव्यपार्ष्णिं गुदे स्थाप्य दक्षिणं च शिवोपरि ।
योनिमुद्राबन्ध एषं भवेदासनमुत्तमम् ॥ ५२ ॥
योनिमुद्रासने स्थित्वा प्रजपेद्यः समाहितः ।
यं कंचिदपि वा मन्त्रं तस्य स्युः सर्वसिद्धयः ॥ ५३ ॥
छिन्ना रुद्धाः स्तम्भिताश्च मिलिता मूर्च्छितास्तथा ।
सुप्ता मत्ता हीनवीर्या दग्धत्रस्तारिपक्षगाः ॥ ५४ ॥
बाला यौवनमत्ताश्च वृद्धा मन्त्राश्च ये मताः ।
योनिमुद्रासने स्थित्वा मन्त्रानेवंविधान् जपेत् ॥ ५५ ॥
तस्य सिद्ध्यन्ति ते मन्त्रा नान्यस्य तु कथंचन ।
ब्राह्मं मुहूर्तमारभ्यामध्याह्नं प्रजपेन्मनुम् ॥ ५६ ॥
अतऊर्ध्वं कृते जाप्ये विनाशो भवति ध्रुवम् ।
पुरश्चर्याविधावेवं सर्वकाम्यफलेष्वपि ॥ ५७ ॥

---

शतसंख्योत्तमेति प्रागुक्तं तदनुवादेन गुणविशेषं विधत्ते यदि स्याच्छतनिर्मितेत्यादिना ॥ ४८ ॥ ४९ ॥ अकारादिळकारान्तं पुनर्ळकाराक्षरं मेरुं कृत्वा जपेत् ॥ ५० ॥ वर्णमालाफलमाह—वर्णैरिति ॥ ५१ ॥ योनिमुद्राबन्धमाह—शिवोपरीति । शिवो लिङ्गं मेढ्रमिति यावत् ॥ ५२ ॥ यं कंचन नानाविधं दारुणं मन्त्रमित्यर्थः । तत्तन्मन्त्राणां छिन्नादीनां लक्षणानि मन्त्रशास्त्रादवगन्तव्यानि विस्तरभया-

नित्ये नैमित्तिके वापि तपश्चर्यासु वा पुनः ।
सर्वदैव जपः कार्यो न दोषस्तत्र कश्चन ॥ ५८ ॥
यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिम् ।
षडक्षरं वा प्रणवं निष्कामो निर्जितेन्द्रियः ॥ ५९ ॥
तथाथर्वशिरोमन्त्रं कैवल्यं वा रघूत्तम ।
स तेनैव च देहेन शिवः संजायते स्वयम् ॥ ६० ॥
अधीते शिवगीतां यो नित्यमेतां जपेत्तु यः ।
शृणुयाद्वा स मुक्तः स्यात्संसारान्नात्र संशयः ॥ ६१ ॥

सूत उवाच ।

एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
रामः कृतार्थमात्मानममन्यत तथैव सः ॥ ६२ ॥
एवं मया समासेन शिवगीता समीरिता ।
एतां यः प्रजपेन्नित्यं शृणुयाद्वा समाहितः ॥ ६३ ॥
एकाग्रचित्तो यो मर्त्यस्तस्य मुक्तिः करे स्थिता ।
अतः शृणुध्वं मुनयो नित्यमेतां समाहिताः ॥ ६४ ॥
अनायासेनैव मुक्तिर्भविता नात्र संशयः ।
कायक्लेशो मनःक्षोभो धनहानिर्न चात्मनः ॥ ६५ ॥
न पीडा श्रवणादेव यस्मात्कैवल्यमाप्नुयात् ।
शिवगीतामतो नित्यं शृणुध्वमृषिसत्तमाः ॥ ६६ ॥

---

त्रेह विलिख्यन्ते ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥५८॥ यस्त्विति ॥ ५९॥६०॥ ६१ ॥६२॥ ६३ ॥ शृणुध्वं शृणुयादिति श्रवणाभ्यासो मुक्त्यभ्यासश्च दार्ढ्याय तत्त्वमसीति नवकृत्वोऽभ्यासवदिति भावः

ऋषय ऊचुः ।

अद्यप्रभृति नः सूत त्वमाचार्यः पिता गुरुः ।
अविद्यायाः परं पारं यस्मात्तारयितासि नः ॥ ६७ ॥
उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ।
तस्मात्सूतात्मज त्वत्तः सत्यं नान्योऽस्ति नो गुरुः ॥६८॥

व्यास उवाच ।

इत्युक्त्वा प्रययुः सर्वे सायंसंध्यामुपासितुम् ।
स्तुवन्तः सूतपुत्रं ते संतुष्टा गोमतीतटम् ॥ ६९ ॥

इति श्रीपद्मपुराणे उत्तरखण्डे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे षोडशोऽध्यायः ॥ १६ ॥

---

॥ ६४ ॥ ६५ ॥ ६६ ॥ आद्येति । "त्वं हि नः पिता योऽस्माकमविद्यायाः पारं पारयसि" इति श्रुतेर्ब्रह्मप्रद एव पितेति युक्तम् ॥ ६७ ॥ ६८ ॥ कालान्तरे पठितुमागतान् शिष्यान्प्रति व्यासस्यायमुपदेश इत्यनुमेयमिति सर्वं रमणीयम् ॥ ६९ ॥

योऽभूज्जीवानुद्दिधीर्षुर्दयालुः
शिष्यो रामो देशिकः श्रीमहेशः ।
गीतां तत्त्वज्ञानशास्त्रं जगौ य-
स्तं वन्देऽहं दिव्यलक्ष्मीनृसिंहम् ॥ १ ॥
काहं मन्दमतिः केदं गीताशास्त्रं महत्तरम् ।
तद्व्याख्याने प्रवृत्तस्य क्षमध्वं मम चापलम् ॥ २ ॥

इति श्रीलक्ष्मीनरहरिसूनुविरचितायां शिवगीताटीकायां बालानन्दिन्यां मोक्षयोगोनाम षोडशोऽध्यायः ॥ १६ ॥

श्रीसांबसदाशिवार्पणमस्तु ॥

गीताशास्त्रस्यादितः श्लोकसंख्या ७७० ॥



# कालभैरवाष्टकप्रारम्भः ।

॥ चामरं वृत्तम् ॥

श्रीगणेशाय नमः ।

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं
    व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
    काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥
भानुकोटिभास्करं भवाब्धितारकं परं
    नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमम्बुजाक्षमक्षशूलमक्षरं
    काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥
शूलटङ्कपाशदण्डपाणिमादिकारणं
    श्यामकायमादिदेवमक्षरं निरामयम् ।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं
    काशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं
    भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ।
निक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं
    काशिकापुराधिनाथकालभैरवं भजे ॥ ४ ॥
धर्मसेतुपालकं त्वधर्ममार्गनाशकं
    कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं
    काशिकापुराधिनाथकालभैरवं भजे ॥ ५ ॥

रत्नपादुकाप्रभाभिरामपादयुग्मकं
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं
काशिकापुराधिनाथकालभैरवं भजे ॥ ६ ॥

अट्टहासभिन्नपद्मजाण्डकोशसंततिं
दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकन्धरं
काशिकापुराधिनाथकालभैरवं भजे ॥ ७ ॥

भूतसंघनायकं विशालकीर्तिदायकं
काशिवासलोकपुण्यपापशोधकं विभुम् ।
नीतिमार्गकोविदं पुरातनं जगत्पतिं
काशिकापुराधिनाथकालभैरवं भजे ॥ ८ ॥

कालभैरवाष्टकं पठन्ति ये मनोहरं
ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् ।
शोकमोहदैन्यलोभकोपतापनाशनं
ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं ध्रुवम् ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं संपूर्णम् ॥

श्रीकालभैरवार्पणमस्तु ॥

